देव-गोष्ठी

लेखकः —

— श्री पण्डितो रामनाथः
वेदालङ्कारः

सुललितसुन्दरकृतिभिश्चित्तं हरति ममेयं पत्रिका
अत्र मञ्जुलाः कला लसन्ति
सरसाः कविता नवाः स्फुरन्ति
नूतमुदारा नया भवन्ति
हरति च सज्जनचित्तं सुन्दरसूक्तिसरोजैः पत्रिका ॥

✿ ✿ ✿

सज्जनचित्तं हरति सुलेखैः
काव्यालापै र्मधुरकथाभिः
नव्यचिरंतनभव्यविचारैः—
जयति सदेयं तनुते सत्साहित्यकलापं पत्रिका ॥

✿ ✿ ✿

एषा सुन्दरभावविकासं
काव्यालोचन-हास्य-विलासम् ।

नूतन शुभ विज्ञानवितानं
कृत्वा विद्वन्मानसभवने जयति सेदयं पत्रिका ॥

अत्र सुरसिकानां वै प्रीतिः
पत्रे पत्रे चित्रा रीतिः ।
सत्साहित्यविकासो नीति-
नूतनरसपरिवाहविसारै हरति मनो मे पत्रिका ॥

मनसि सुरुचिरमानन्दविलासं
सुरभाषा सत्कारविकासम् ।
कारं कारमियं जयतादिह
शिवशङ्करनिःसीमकृपातः 'कुले' सदेयं पत्रिका ॥

हरिता भरिता पल्लविलेयं
सरसकुसुमिता सुरभियुतेयम् ।
रसलोलुपकवितृप्तिकरी स्याद्
गुरुकुलकोविदकीर्तिपताका रम्या 'गोष्ठी'-पत्रिका ॥

"श्री. पं. रामनाथ जी वेदालङ्कार"

# अनन्त कविः

अद्य अहं संस्कृत साहित्य भाण्डागारे सुप्रसिद्धस्य रससिद्धान्तकवेः कीर्तिपताकायमानस्य चम्पूभारताख्यकाव्यस्य किमप्यनुशीलनं परिचयस्यां कर्तुमुद्यतः।

गद्यकाव्यानीव चम्पूकाव्यान्यपि गीर्वाणगिरि अङ्गुल्यगणनीयान्येव इति न सन्तोषविषयः शेमुषीजुषाम्। तत्राऽपि च काऽपि चम्पूः प्रथमकोटिककाव्येषु स्थापनाऽर्हा नास्ति। अस्य कारणमेकं इदमपि संभवति यत् वाल्मीकिव्यासकालिदासप्रभृतिभिः कवि मूर्धन्यैः पद्यकाव्यानि नाटकान्येव वा स्व प्रतिभाप्रकर्षेण महिमानमारोपितानि। सरस्वतीपुत्रं केवलं बाणमात्रस्यैव च संस्कृत गद्यकविता अद्य समुच्छ्वसितीव। एतेषां सम्यक्स्रष्टॄणां कानिचिदपि कवि नाऽलंचकार सुभारतीं चम्पूमय्या रचनया। प्रायो मध्ययुगश्रेणी परिगणनीयैः भोजराज, त्रिविक्रम, वेङ्कट, अनन्त प्रभृतिभिरेव कविभिः संभाविता चम्पूपद्धतिः। परं द्वितीयं कारणं, येनैव च प्रकृष्ट कविभिश्चम्पूपरिपाटी नाङ्गीकृता - इदमस्ति यत् चम्पूमय्यां रचनायां अन्तरान्तरा गद्य पद्य परिवर्तनैः निर्बाधो रसधाराप्रवाहः प्रवर्तितुं न शक्नोति। पुनश्च सर्वाणि एव समुपलभ्यमानानि चम्पूकाव्यानि प्रायस्तथा श्लेष-

समासादि समासादितानि यथा प्रसाद गुणस्य तत्र सर्वथा शब्दनिर्माणायभाव-नैव भवति । अतः कवितावलेन जगति ख्यातिकामैः कविजनैश्चम्पूमयरचना-यां स्वशक्तिव्ययः कदापि न कार्यः। इयं रचना वस्तुतः पाण्डित्यस्य प्रकर्ष प्रकाशनायैव साधीयसीति मदीया मतिः । अस्तु ।

प्रायः सर्वैरेव संस्कृतक-विभिः एव परिचय प्रदाने बद्धमुष्टिता स्वीकृतेति दौर्भाग्यमेव तावदस्माकम् । अयं प्रस्तुतोऽत्र कविरपि तेष्वेवान्य-तमः । अनेन हि माघादिवत् ग्रन्थान्ते प्रशस्तिप्रणयन प्रकरणेनाऽपि नामवर्ज स्वसर्वोऽपि परिचयः न तत्र किमपि विमृश्य निगूहितः । अनन्तरमपि अन्ये-ऽपि केचन कवयः श्रूयन्ते तैः सहास्य ऐकात्म्य पार्थक्य विषये किमपि निर्णेतु-मसमर्थ एवाऽयं जनः । न तावदनेन एव निर्मितस्य ग्रन्थान्तरस्य कापि सूचना दत्ता न वा तैः चम्पूभारतं स्वकृतित्वेन स्वीकृतम् । एवं मन्ये तद्भिन्न एव कश्चिदयं कविः स्या-त् । अस्य महोपाध्यायपदत्वेन ब्राह्मणत्वं तु निर्विवादमेव ।

सम्प्रति प्रश्नोऽयं द्वितीयः समुदेति यदसौ कविः कदा कुत्र च बभूवेति । अस्य प्रश्नस्य निर्विवादमुत्तरं दातुमद्यावधि यद्यपि नाऽस्मत्कृते तथाप्याशासे यच्छीघ्र-मेव कश्चित्संतोषजनको निर्णयो म-या कर्तुं पारयिष्यते । केनाऽपि बहिरंग साक्ष्येणाऽस्मिन् विषये न किमपि प्रकाश्यते । अन्तरंग साक्ष्य विषये तु प्रस्तुतोऽयं प्रक्रमः :-

(१) तृतीय स्तबकस्य चतुः-

# देव-गोष्ठी

पञ्चाशत्पद्ये "तोप" इति प्रसिद्धस्य नलिक यन्त्रस्य तादृशं जीवितमिव वर्णनं समुपलभ्यते येन संशीति लेशोऽपि न संभवति यदस्य कवेः समये युद्धादिषु "तोप" यन्त्रस्य प्रयोगः सुपरिचित आसीत्। पद्यं चेदम् —

कालाम्बुदालि नलिकाक्षणदीप्तिवर्त्या-
संधुक्षिताक्षपदि सध्वनितैः सरद्भिः।
वब्भ्रिमत्सीस गुलिका निकरैः कठोरैः -
धर्माभिमातिमवधीद् घनकाल योधः॥
॥ ३।१०।१४।

नितान्त रमणीयमिदं रूपकम्। एतादृशं च वर्णनं शुक्रनीतौ "नालकं द्विविधं प्रोक्तं ह्रस्व दीर्घ प्रभेदतः" इत्यादि प्रकरणं पठित्वैव तोपं असाक्षात्कृत्य केवलं कल्पना बलेन कर्तुं न शक्यते। मम सम्मतौ तु शुक्रनीता वपि निर्दिष्टं प्रकरणं केनाप्यधुनैव प्रक्षिप्तं स्यादित्यपि संभवति।

इत्थं च भारते यवनाऽऽगमनात्पूर्व मेव कविरयमुत्पन्न इति सुनिश्चितम्।

(2) दर्शनशास्त्रे चन्द्रकान्तमणे रदि प्रतिबन्धकत्वेन उपन्यासो नाति प्राचीनः। मूलसूत्रेषु भाष्यग्रन्थेषु च तदनुपलम्भात्। द्वादशशतके समुत्पन्नस्य उदयनाचार्यस्य ग्रन्थे प्रायः प्राथम्येन विषयोऽयं लोचनगोचरी क्रियते। तदूर्ध्वं तु प्रचुरोऽस्य प्रचारो जातः। अनेन कविरेतेन मणि-प्रतिबन्धकतावादेन सम्यक् परिचितः प्रतीयते - यथा —

अप्याहृतो मारुतिनाहृतेन भंगस्य -
शीघ्रं गुरुनन्दनस्य।
दन्तोमणिः पार्वतिनन्दनाख्याः शोकाग्निदाहे प्रतिबन्धकोऽभूत्।
१२।२०।

एतेन ज्ञायते यदनन्तकवेः काले वादोऽयं दक्षिणशास्त्रे प्रचलितः आसीत्। एवं च चम्पूभारतस्य निर्माणकालः दशमशतकादनन्तरमेव कश्चित् अस्ति।

(३) विराट नगरे कुरुसेनयाऽऽक्रमणं कृतम्। तस्मिन् प्रसंगे कविः वर्णयति —

भीमसेनमिभजाशमितो यो दक्षिणे-
झटिति मत्स्य पुरस्य।
उत्तरेऽप्युदभवत्तु पार्श्वे पक्षपात-
इव कौरव बाधः ॥ ६।५।

यद्यपि भीमसेनस्य सेनान्तं, तद्रहितं च द्विविधमेव नाम प्रसिद्धम्।
अयमेव कविरेकत्र लिखति —

अत्यन्तबाल्यात्सुतलालिताभिरन्योन्य-
मधोक्तिभिराहूयत्सु।
सभीमसेनोऽजनि पाण्डुपुत्रेष्वचोल
नामाऽपि च पूर्णनामा ॥ १।६३।

तथापि अस्मिन् पद्ये भीमे वैद्यत्वमारोपयन् कविस्तन्नाम सेनान्तं करोति। एतच्च नाऽऽकस्मिकं निर्मितम्, न किन्तु कविरनेन वंगदेशीय सेनाऽऽख्य वैद्यवंशेन सुपरिचितः प्रतीयते। अस्य च वंशस्य कालानुशीलनेन अनन्तकवि काल विषयेऽपि किञ्चित् ज्ञातुं शक्यते। सेनवंशश्च दशमैका-दशप्रभृतिषु शतकेषु वंगे आसीदिति।

(२) अत्यन्त प्राचीन कालेऽपि एकस्मात्स्थानात् स्थानान्तरं प्रति पत्राणि प्रेषयन्ते स्म। परमेतत्केवलं नृपप्रभृतिरेव कैश्चिदति समर्थैः जनैः क्रियते स्म। साधारणजनतायाः पत्र प्रेषणेन सह कोऽपि सम्बन्धो नासीत्। यवन कालेतु अस्य व्यापकः प्रबन्धो जातः। तदा च साधारणा - अपि जनाः पत्राणि प्रेषयन्ति स्म। चम्पू भारतेऽपि पत्र प्रेषणस्य वर्णनं लभ्यते —

# देव-गोष्ठी

युधिष्ठिरेण राजसूययज्ञः प्रार-
ब्धः । तत्र देवानुद्दिश्य उत्तमं हव्य-
द्रव्यमत्यधिक मात्रायां अग्नौ आहु-
तम् । अग्निश्च देवानां दूतः । स
च एकाकी एव तद् द्रव्यं स्वर्ग
नेतुं असमर्थः सन् पत्र द्वारा सर्वा-
न् देवान् सूचयति यत् सर्वे स्वय-
मेवागत्य स्वांशं गृह्णन्त्विति यथा-

तत्र प्रवर्ग्य जनितं दिविधूम चक्र-
मालक्ष्यते स्म विबुधान् प्रति पावकेन ।
आवाक दुर्दि लविकुविणेन वेर्णां -
दाक्षत पत्र वलयं किल नीयमानम् ।

किञ्च यथा हि - अग्रले अति-
ष्टसूचकं अतिपातिकं वा पत्रं कोण-
कलीन चिह्न्यते तथैव तदा पत्र-
कोणं कृष्णमस्या रञ्ज्यतेस्म अग्नि वा
~~दह्यतेस्म~~ दह्यते स्म । ——

माध्वी लिहा विरुते मालिनी कृताया
कान्तार सीम्नि नव केतक वर्ह रेखा ।
दग्धा ऽञ्चले स्मरमिया दयितांजनेन
संप्रेषिता पथिक मद्गृह पत्रिकेव ॥

(४) वस्तुतः सुरक्षिती
करणाय, राजशासनानां प्रामाणिक-
त्वाय च मुद्राया व्यवहारः पुराप्या-
सीत् । एतच्च कौटिल्यार्थशास्त्रेण,
मुद्राराक्षसेन, अन्यैश्च ग्रन्थैः प्रतीय-
ते । परं तु सा मुद्रा अंगुलीयेन
मस्यादिना च दीयते स्म । मध्य-
काले अर्वाचीन काले च जतु मुद्रा-
याः प्रयोगो जातो यथा ऽद्यत्वे
विलोक्यते । जम्बूभारतेऽपि मुद्रेयं
दृश्यते —

कुरुकेलिवनेषु मल्लिकाकुसुमेषु -
भ्रमरावलिवितीर्णौ ।
मृतुला मधुगन्ध गुहये जतुनाऽग्रे-
निहितेव मुद्रिका ॥ ३।८३ ॥

मल्लिका कुसुमानां मधु गन्धश्च
केनाऽपि नापह्रियते इति हेतो तेषां
मुखं "भ्रमरसुषमा" मुद्रया निरुद्धम् गीर्वाणे-
न। अतस्मापि कल्पनया कवेरर्वाची-
नत्वम् स्फुटम्।

(५) भारतीय लिपेरपि
विकास : शनैः २ अजनि। लेख-
काले यदि किञ्चित् अक्षरं पदं
वा प्रमादेन शैथिल्येण वा भ्रष्टं भव-
ति तर्हि अत्र X एतादृशं चिह्नं
कृत्वा तदुपरि लिख्यते। एतच्च चिह्नं
"हंसपाद" इत्युच्यते। अति प्राची-
न साहित्येऽस्य प्रयोगो न लभ्यते।
चम्पूभारते त्वस्य दर्शनात् ग्रन्थस्य अ-
र्वाचीनता परिज्ञायिता भवति —
कीचकः सैरन्ध्रीरूपधारिणीं द्रौपदीं
चाटुवचनैः स्तुवयति कथयति च यत्
— हे कान्ते! तव वदनं कमलमेव।
तस्य च निर्माणं अन्येषां कमलानां-
मध्ये सरस्येव समुचितमासीत्। परन्तु
सरोरुह निर्माणसमये वृद्धत्वात् विस्मरण-
शीलो वेधाः प्रमादं चकार। पुनश्च
संजातस्मृतिः तव वदनं निर्ममे। सर-
सि च स्खलनाद्यास्य सूचनाय हंसा-
नां पादेन हंसपादं चिह्नं चकार
लिखति —

कान्ते तवाननमिदं कमलावलीषु
स्रष्टुं पुरा सरसि विस्मृतमेव धात्रा।
पश्चाद्विचिन्तितवता तदुपान्तभागे
संदृश्यते विरचितः खलु हंसपादः॥

एतादृशी एव कल्पनैका
नैषधीय चरिते श्री हर्षेणाऽपि कृता।
श्रीमतां मनोरंजनार्थमिह समुपस्थाप्य-
ते - तदोजस स्तद्यशस : स्थिता विमौ
वृथेति चित्ते कुरुते यदा यदा
तनोति भानोः परिवेश कैतवात्
तदा विधिः कुण्डलनां विधोरपि॥

नलस्य यशसि स्थिते चन्द्रस्य, प्रतापे स्थिते च सूर्यस्य आवश्यकतैव नास्ति। निर्मितौ चेतौ। स्व निर्मितिश्च स्वयं न विनाशनीया - विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्। इत्युक्त्यानुसारम्। अतः तयोरन्यथा सिद्धीकरणाय विधाता समये २ परिवेशव्याजेन कुण्डलयति। पुरा सकृल्लिखितमक्षरं ( न क्षरं इति व्युत्पत्त्यानुलस्वरूपं मन्यमानं ) अशुद्धमपि सद् न छिद्यते स्म तस्याऽनावश्यकताद्योतनाय तल्लिपिः कुण्डलना क्रियते स्म। इमां प्रथां आश्रित्य उत्प्रेक्षा छलेन कविना कीदृशं कौशलमुल्लीखितम्।

कालनिर्णय विषये एकैव युक्तिरवशिष्टा।

अस्य टीकाकारो रामचन्द्राख्यः कश्चित्। अयं च रामचन्द्रः रामायणचम्पू टीकाकारात् रामचन्द्रात् भिन्नः इत्यवधेयम्। अनेन टीकाकारेण स्वकृत टीकायां अलंकाराणां लक्षणानि काव्यप्रकाशात् साहित्यदर्पणाद्वा नोद्धृतानि। एतेन ज्ञायते यदस्य टीकाकारस्य समयेऽपि काव्यप्रकाशस्य प्रचुरः प्रचारो नासीत् दर्पणस्य तु सत्तापि नासीत्। दर्पणकालस्तु खीस्तस्य चतुर्दश शतक निश्चितमास्ते। एवं चायं कविः चतुर्दश शतकात्प्राचीनः द्वादश शतकादर्वाचीनश्चास्ति।

अस्य च ग्रन्थे सर्वत्रैव अक्षरडम्बरस्य प्राधान्यं वरीवर्ति।

श्लेष प्रायमुदीच्येषु प्रतीच्येष्वर्थमात्रकम्।

उत्प्रेक्षा दाक्षिण्यात्येषु गौडेष्वक्षर-
डम्बरः ॥ इति बाण वचनानु-
सारं कवेरस्य निवासो गौड-
देशः प्रतीयते ।

वैद्यवंश परिचयेन, मणिप्रतिबन्ध-
कतावादेनापि पक्षोऽयमेव
दत्तहस्तावलम्बो भवति ।

अहो! वैचित्र्यं वै भुवि विलतं वैविध्यते। एष योद्धा निर्भीकः कथ्यते? यो यशोनाशभयेन रणाङ्गण एव करवालचालनायासखिन्नो विपक्षयोधकैः घातितो धरणीतलमालिलिङ्ग। एष च भीरुपदभाक्! यो युद्धभूमितः पलायितः करवालादपि कठोरतराणां कठोरहृदयैरविरतं क्षिप्यमाणानामपकीर्तिकारकाणां कलुषितवाक्यशराणां भियमपहाय जगति विचरति। प्रथमो यशोनाशभीरुरपि भीरुर्न कथ्यते। द्वितीयो यशोनाशभीतिं परित्यज्यापवादभयमपि नानुशोचति तथापि कथं भीरुपदभाक्!

❀ ❀ ❀

गुरुकुलात्प्रत्यावृत्तं निज-बालकमवलोक्य हर्षितहर्षिता माता कथयति "आगतोऽस्ति चतुर्दशवर्षाणि समवाप्य मे बालः। जन्वभिवर्धितः शरीरेण सुकुमाराण्यासीदङ्गानि बाल्ये। अधुना दृढं हि गात्रं दृश्यते। विद्यालयं प्रविष्ट आसीदष्टमनुभवन्वर्षम्! अद्य खलु सफलतां लेभे मे

लोचन युगलं बालावलोकनेन।

एतर्हि जहास निर्दयमट्टहासं करालः कालः। विचचार च स अति-तरमन्तिकमागच्छसि भो! बाल! मद्ग्रासतामाप्तुम्।

नैतद्धास्यमाकर्णि वृद्ध-कर्णेन नैतदबोधि बालबुद्धिना। परं नात्र संशीतिः निर्दयेन काले-नेहिते।

❀ ❀ ❀

भ्रान्तिदेवि! नमस्तुभ्यम्।
प्राक्षेपि त्वया भुवि भ्रमजालम्।
मोहयसि महात्मनामपि मनांसि।
भ्रामयसि भुवनत्रितयम्। चाल-यसि चराचरनिचयम्।

एष युवा तैलमर्दनेन चमत्कृत-कचः कालपक्षधरः उषन्मुखीकृत-वक्षःस्थलो हास्याविर्भावितरदना-वलिः स्वकीयं लावण्यं दर्शयि-तुकामः कीदृग्विधं चेष्टते। आत्मानं सुन्दरं दर्शनीयञ्च मन्यमानो गर्वमुद्वहति। विस्मृतं खल्वेतेन स्वशरीरस्य मृत्तिकात्मकत्वम्।

प्रतिदिवसमवसानमासा-दयतां पुरुषाणां सहस्रं पश्यन्नपि धिक्! अधिकाधिकं जीवनाय नरैरिष्यते प्रार्थ्यते च।

को जानीते प्रभुप्राप्तिः सम्भवा न वा। सम्भवा भवेच्चेत् तदा परमात्मनो माहात्म्यं स्वल्प-मेव। अगम्यत्वं हि तस्य सर्वतो महद्वैशिष्ट्यम्। एवं

## देव-गोष्ठी

सत्यपि महात्मापदवाच्यैस्तत्कृते यत्यते।

परमात्मना प्रदत्तबुद्धिरपि पुरुष ईश्वरं विहाय ऐश्वर्यं प्रति साध्यं विहाय साधनं प्रति धावति। तस्य महतो महीयानणोरणीयानात्मा स्थूलसाधनेष्वेव सुखमनुभवति।

भ्रान्तिदेवि! नमस्तुभ्यं सर्वत्र विस्तृतासि।

शास्त्राण्यनुशासति भयात्तपति सूर्यः। भयाद्वहति वायुः। भयात्सर्वं प्रतिष्ठितम्।

भयेनैव प्राणिनां प्राणत्राणः। जीवनहानभीतिरेव तान्पालयति। विगतभीः दुःसाहसं कुर्वाणो मरणमवाप्नोति।

परस्परं भयाभावे सति महती दशा सञ्जायते। इच्छासम्प्राप्तिकालमेव मानवो मानवं, समाजः समाजं, देशो देशमाक्रमेत्। एवं च सर्वनाशसमुत्पत्तिः।

ईशभयादेव विश्वं वरीवर्ति। दुःखभयाद् ध्रियते धर्म, क्रियते कर्म, शिक्ष्यते शिक्षा अपकीर्तिभयाद् सदाचारो दृश्यते, परस्मै प्रियं सम्पाद्यते, सर्वैः सह स्नेहेन सम्मिल्यते।

स्वनाशभिया परेषां नाशः सृज्यते, परेषां द्रव्यमपह्रियते। सर्वत्र भयादेव शुभाशुभं वर्वर्ति।

भीतिश्च पुनः मानसिका

भ्रान्तिः। कल्पनालोकमधिवसद्भि-
रस्माभिरनागत विपदागत विपदेवाव-
धार्यते कार्याय च सन्नह्यते। प्रत्यक्ष-
तया भयं नानुभूयते।

भ्रान्ति देवि! नमस्तुभ्यं
भ्रामयसि भुवनत्रितयम्। चालयसि
चराचरनिचयम्।

तनोतु शुभ्रसम्पदां पुनातु दुष्टभावनां
करोतु सिद्धकामनां क्षिणोतु शत्रुधारणाम्।
हृणातु पापकारणां सुनोतु वाक्यशोभनां
असह्यदुःखहारणा शुभा सदा विचारणा ॥

उपसर्पतु पूर्णतां प्रति —
परमात्ममहोदधौ जीवो जलबिन्दुवत्।
उद्रजनाम्लजनरूपं तत्वं द्वयोरपि वर्तते।
परमात्मा पूर्णस्तथा जीवोऽपि यत[illegible]।
यतो द्वयोरपि समं तत्वम्।

देव-गोष्ठी

# गीतायां कर्मयोगः

केचन्चित्कविना कथितम् —

'वाताभ्रविभ्रममिदं वसुधाधिपत्य-
मापातमात्रमधुरो विषयोपभोगः।
प्राणास्तृणाग्रजलबिन्दुसमा नराणां
धर्मः सखा परमहो परलोकयाने॥'

तथा च —

'आहारनिद्राभयमैथुनञ्च
सामान्यमेतत्पशुभिर्नराणाम्।
धर्मो हि तेषामधिको विशेषो
धर्मेण हीनाः पशुभिः समानाः॥'

तस्मिंश्चास्मिन् बहुविधचिन्ता-सन्तानवितानसन्दानिते नानावि-धविविधसम्बन्धबन्धनिबद्धे वि-चित्रव्यापारविचित्रिते प्रचुरपाप-पुण्यप्रपञ्चप्रचुरे करालकराले विपज्जालज्वालावलीसंकुले दुरवगाहगहनगभीरे प्रगाढे पारावारे इव संसारे सकले-ऽस्मिन् बुधास्तावदस्य धर्मस्यैव महत्त्वमनुभवन्ति गायन्ति च।

तथा हि विमलैर्निर-हङ्कारैः शीलशालिभिः सदा-चारैः तपःपूतकल्मषाशयैः सम्यगधिगतधर्मतत्त्व-साक्षात्कारैः सकलसत्त्व-हितनिहितमनोभिः शान्त-दर्शिभिः आत्मतत्त्वदर्शिभिः महर्षिभिः श्रुति-स्मृति-पुराणे-

## देव-गोष्ठी

विपश्चिदाचार्यपदमागतवन्तः ये हि विद्वन्मण्डलीमण्डना जना वेदान्तदर्शनस्य गीताया उपनिषदाञ्च भाष्यं व्यदधात्। प्रतिवादिभयङ्करेण श्रीशङ्कराचार्येण प्रथममेवं भाष्यं कृतम्। श्री रामानुजाचार्यस्य श्री मध्वाचार्यस्य श्रीनिम्बार्काचार्यस्य श्रीश्रीधरस्वामिनश्च भाष्याणि प्रभृति गीतोपरि समुपलभ्यन्ते। यतोहि ते सर्वे आचार्याः स्वस्वमतपोषणार्थमेव गीतायां मतमशिश्रियन्।

तथा च प्रभूतज्ञानविज्ञानभरितेऽस्मिन् समस्तेऽपि प्रतिक्षणमपि जगति द्वयोरेव पुस्तकयोः सर्वाधिकलभः (demand) क्रयश्च वर्तते – बाइबिलस्य गीतायाश्च। बाइबिलस्याधिकव्ययस्तु अतो भवितुमर्हति यतस्तस्य प्रचारोपरि कोटिपथसम्प्रदायानां शक्तिः स्वच्छन्दमानन्दं करोति। यत् गीताया निर्णयसंकलनस्य कस्य देशस्य पुस्तकावली करोतीति यस्य प्रचारोपरि नैव काचिद् राजशक्तिः। बाइबिलप्रसारार्थं विशालभण्डारो नास्ति, यं गीतायाः कृते च वित्तलेशोऽपि। यत् पुनरपि भार पुस्तकानाम् सर्वेषां हृदयानां निखिललोकवासिनानां लोकानां प्रीतये भजनं क्रियते तस्य कारणमत्र निजं वैशिष्ट्यमेव, अस्या निजमान्तरिकं माहात्म्यमेव।

गीतैका रत्नावली

सा लघीयसी स्वल्पपत्री पुस्तिका

यद् गीतामतके एव पारायण
समाश्रित्यानीय। यतस्या एव
भाष्यं च बलमेन मान्येन लोक-
मान्येन भारतजननीललामतिलके-
न बालगङ्गाधरतिलकेन मण्डले-
कारायां कारावासभुक्तितो षड्-
वर्षकालेन समाश्रित्यानीतमस्या-
श्चानुशीलने स्वजीवनस्य सर्व-
श्रेष्ठतमो भागो यापितः।
स्वनामधन्यस्य महात्मनो गान्धि-
महोदयस्य जीवनमपि सार्थमि-
दुर्मेधा गीतैव कृतार्था लक्ष्य-
ते। एडवर्ड कार्पेण्टर (Edward
Carpentar) महोदयस्य जीवन-
नापि हृदेवोपजनाभिमुखेन ब-
द्धे यदा सततं विच्छिन्नता तेन
गीतामृतमास्वाद्य लब्धिर्गतम्।
प्रकारान्तरेण गीता सु-
दृढलौहनिगडबद्धानां कारागार-
निपातितानां बन्दीनामेकमात्र-
मवलम्बनं वर्तते। प्रकारान्तरे-
णैव गीता जितसकलेन्द्रियाणां
वीतरागाणां योगिनां संन्यस्त-
सर्वकर्मणां दण्डसंन्यासिनां सं-
न्यासिनां विरतसकलबाह्यप्र-
वृत्तीनां पुण्यात्मनां महात्मना-
माश्रयभूतात् उन्नतकन्धरात्
भूधरकन्दरात् वा, धुतपटी-
रस्थात् लघुकुटीरकान्ता, वि-
लसितवसुधाखण्डात् सदन-
पादपषण्डात् वा नितरामना-
रतं संशोभयति। तथा च—

सर्वोपनिषदो गावो
दोग्धा गोपालनन्दनः।
पार्थो वत्सः सुधीर्भोक्ता
दुग्धं गीतामृतं महत्॥

तत्सर्वोपनिषत्सारभूतायाः
स्वयं श्रीकृष्णमुखारविन्दनिःसृतायां

# देव-गोष्ठी

श्रीमद्भगवद्गीतायां गीतायां प्रत्येकं मतवादिनः स्वं स्वमेव मतं व्याचिख्युः।

## ज्ञानयोगः

शङ्कराचार्याः अन्येषां मतानां निरासं कृत्वा ज्ञानवादस्यैव प्राधान्यमूचुः। तेषां मते-

संशयात्मा विनश्यति॥

सर्वं कर्माखिलं पार्थ
ज्ञाने परिसमाप्यते॥

सर्वं ज्ञानप्लवेनैव
वृजिनं संतरिष्यसि॥

यथैधांसि समिद्धोऽग्नि-
र्भस्मसात्कुरुतेऽर्जुन।
ज्ञानाग्निः सर्वकर्माणि
भस्मसात्कुरुते तथा॥

तस्मादज्ञानसम्भूतं
हृत्स्थं ज्ञानासिनात्मनः।
छित्त्वैनं संशयं योग-
मातिष्ठोत्तिष्ठ भारत॥

यस्य सर्वे समारम्भाः
कामसङ्कल्पवर्जिताः।
ज्ञानाग्निदग्धकर्माणं
तमाहुः पण्डितं बुधाः॥

ब्रह्मार्पणं ब्रह्म हवि-
र्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं
ब्रह्मकर्मसमाधिना॥

विहाय कामान्यः सर्वान्
पुमांश्चरति निःस्पृहः।
निर्ममो निरहङ्कारः
स शान्तिमधिगच्छति॥

न हि ज्ञानेन सदृशं
पवित्रमिह विद्यते॥

अव्यक्तोऽयमचिन्त्योऽय-
मविकार्योऽयमुच्यते॥

समदुःखसुखः स्वस्थः
समलोष्टाश्मकाञ्चनः।
तुल्यप्रियाप्रियो धीर-
स्तुल्यनिन्दात्मसंस्तुतिः॥
मानापमानयोस्तुल्य-
स्तुल्यो मित्रारिपक्षयोः।
सर्वारम्भपरित्यागी
गुणातीतः स उच्यते॥
सर्वकर्माणि मनसा
संन्यस्यास्ते सुखं वशी।
नवद्वारे पुरे देही
नैव कुर्वन्न कारयन्॥

इत्यनेकैः श्लोकैः स्थितप्रज्ञस्य पुनः कथं स्थितिस्तस्य वर्णनं येनेदं ज्ञायते यद् गीतायाः प्रतिपाद्यो विषयो ज्ञानवादमेवाश्रित्य ज्ञानमेव।

## भक्तियोगः।



इतश्च भक्तिवादिनः
कथयन्ति —
अपि चेत्सुदुराचारो
भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः
सम्यग्व्यवसितो हि सः॥
मां हि पार्थ व्यपाश्रित्य
येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रा-
स्तेऽपि यान्ति परां गतिम्॥
यत्करोषि यदश्नासि
यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय
तत्कुरुष्व मदर्पणम्॥
सर्वगुह्यतमं भूयः
शृणु मे परमं वचः।
इष्टोऽसि मे दृढमिति
ततो वक्ष्यामि ते हितम्॥
मन्मना भव मद्भक्तो

# देव-गोष्ठी

मद्याजी मां नमस्कुरु।
मामेवैष्यसि सत्यं ते
प्रतिजाने प्रियोऽसि मे॥

सर्वधर्मान् परित्यज्य
मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो
मोक्षयिष्यामि मा शुचः॥

मत्कर्मकृन्मत्परमो
मद्भक्तः सङ्गवर्जितः।
निर्वैरः सर्वभूतेषु
यः स मामेति पाण्डव॥

मय्यावेश्य मनो ये मां
नित्ययुक्ता उपासते।
श्रद्धया परयोपेता-
स्ते मे युक्ततमा मताः॥

पत्रं पुष्पं फलं तोयं
यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृत-
मश्नामि प्रयतात्मनः॥

कौन्तेय प्रतिजानीहि
न मे भक्तः प्रणश्यति॥

यो मद्भक्तः स मे प्रियः॥

इत्येवं नानाप्रकारैस्तथा विविध-वाक्यखण्डैरेवं प्रतीयते यद् गी-तायां भक्त्या उपासनायाश्चैव प्राधान्यम्।

## राजयोगः

ज्ञानकर्मोपासनात्मकस्य मार्गत्रितयस्य मध्येऽस्माभिर्-बुना यावत् पूर्वपक्षरूपेण गीता-यां ज्ञानं योगासना वा प्राधान्येन प्रतिपाद्यते इति विशदीकृतम्। अ-सकृत् मतस्य तथान्यदपि केचा-न्मत मतमत वेदान्तिनो ये गीताग्रन्थं पातञ्जलयोगविशद-कारकमेव मन्यन्ते। तेऽपि स्वा-भिमतमतपोषणार्थं कतिचिच्छ्लो-कानि दर्शयन्ति। यथा—

योगी युञ्जीत सतत-
आत्मानं रहसि स्थितः।
एकाकी यतचित्तात्मा
निराशीरपरिग्रहः॥

शुचौ देशे प्रतिष्ठाप्य
स्थिरमासनमात्मनः।
नात्युच्छ्रितं नातिनीचं
चैलाजिनकुशोत्तरम्॥

तत्रैकाग्रं मनः कृत्वा
यतचित्तेन्द्रियक्रियः।
उपविश्यासने युञ्ज्या-
द्योगमात्मविशुद्धये॥

समं कायशिरोग्रीवं
धारयन्नचलं स्थिरः।
मनः संयम्य मच्चित्तो
युक्त आसीत मत्परः॥

यथा दीपो निवातस्थो
नेङ्गते सोपमा स्मृता।
योगिनो यतचित्तस्य
युञ्जतो योगमात्मनः॥

यतो यतो निश्चरति
मनश्चञ्चलमस्थिरम्।
ततस्ततो नियम्यैत-
दात्मन्येव वशं नयेत्॥

प्रशान्तमनसं ह्येनं
योगिनं सुखमुत्तमम्।
उपैति शान्तरजसं
ब्रह्मभूतमकल्मषम्॥

सन्तुष्टः सततं योगी
यतात्मा दृढनिश्चयः।
मय्यर्पितमनोबुद्धि-
र्यो मद्भक्तः स मे प्रियः॥

यस्मान्नोद्विजते लोको
लोकान्नोद्विजते च यः।
हर्षामर्षभयोद्वेगै-
र्मुक्तो यः स च मे प्रियः॥

युक्ताहारविहारस्य
युक्तचेष्टस्य कर्मसु।

# देव-गोष्ठी

पुस्तकस्यैव बोधस्य
योगो भवति दुःखहा ॥
इत्यादि।

× × ×

अत्र प्रत्येकं मतवादी स्वस्वमतमनुसृत्य कतिपय-श्लोकान् श्लोकखण्डान् वा सं-गृह्य तानेव ग्रन्थसारभूतान् अभ्यस्य सर्वे जानन्तु इति कथ-यन् स्वमतं प्रख्यापयति। अत्रापि महात्मगान्धिमहोदयो गीतायां 'अनासक्तियोगं' प्रतिपादयति।

परं यदि कस्यचिद् ग्रन्थस्य कृत्स्नबोधोऽभीप्स्य-ते तर्हि तात्पर्यनिर्णये इद-मावश्यकम् —

उपक्रमोपसंहारौ
अभ्यासोऽपूर्वताफलम्।
अर्थवादोपपत्ती च
लिङ्गं तात्पर्यनिर्णये ॥

निकषेऽस्मिन्नस्या गीताया यदा वयं विषयस्य परीक्षणं कुर्मस्तदा सुस्पष्टं प्रतीयते यद् गीतायाः प्रतिपादनीयो विषयः कर्मयोग एव। केचित्तु दार्शनिक-ज्ञानवन्तो भक्तिमन्तो वदन्ति यद् गीतायां सर्वेषां समन्वयो विद्यते। परं वयं अस्यकृतमते विवादग्रस्तमते अस्माकं न परि-यन्त एतदेव, कथयामो यद् गीता-या उपक्रमोपसंहारादिभिः तात्प-र्यनिर्णयकैरावश्यकैर्हेतुभिः कर्म-योग एव सिध्यति। अर्जुनस्य समराङ्गणे स्वबन्धुबान्धवान् अवलोक्य प्रवृत्तेन युद्धात् विलोमं संजातमोहस्य कार्पण्यसङ्कोच-

एवं तस्यां श्रेयस्कर गीता पार-
मार्थे यथा अस्माभिः लौकैः प्र-
कार्यते —

दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम्॥
सीदन्ति मम गात्राणि मुखं च परिशुष्यति।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते॥

. . . . .

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन॥

गुरूनहत्वा हि महानुभावान्
श्रेयो भोक्तुं भैक्ष्यमपीह लोके।
हत्वार्थकामांस्तु गुरूनिहैव
भुञ्जीय भोगान् रुधिरप्रदिग्धान्॥

भगवान् श्रीकृष्णोऽर्जुनमुप-
दिशति युद्धार्थं संनादयति।
तं कर्मणि महात्मा समवगमयति, योगः
पुन्येन च कथयति —

'तस्माद्युध्यस्व भारत।'

'तस्मादुत्तिष्ठ कौन्तेय
युद्धाय कृतनिश्चयः।'

'योगस्थः कुरु कर्माणि।'

'योगः कर्मसु कौशलम्।'

इत्थं सर्वस्यामपि गीतायां
सर्वत्र एवंविध एवोपदेशः स-
मुपलभ्यते यत्र सातिशयं एव
एवं यदर्जुनो युद्धसन्नद्धो भवेत्।
ज्ञानयोग-ध्यानयोग-राजयोग-
भक्तियोगादीनां सर्वेषां योगाना-
मुपदेश एतदर्थमेव यत्पार्थः
स्वक्षात्रधर्मं पालयतु। ~~[illegible]~~ वोचत
कथं तर्हि अस्माद्दशायामपि
कृष्णानुयुक्तोऽर्जुनो आहति —

नष्टो मोहः स्मृतिर्लब्धा
त्वत्प्रसादान्मयाच्युत।
स्थितोऽस्मि गतसन्देहः
करिष्ये वचनं तव॥

सत्यं त्विदं यत् 'प्रोद्यि-
लङ्घित एव बालभट्टैः कितवस्य

## देव-गोष्ठी

गम्भीरोऽह ' इत्यनुसारमस्य गी-
तापारावारस्यापि गम्भीरतां त
एव जानन्ति जना निष्पक्ष-
समालोचका यैरस्य गम्भीरमनु-
शीलनं व्यधायि ।

तत्त्वतस्तु गीताप्रतिपा-
दितो यो हि धर्मो वर्तते स फ-
लत्यागपूर्वकः कर्मयोग एव ।
तथा च —

कर्मण्येवाधिकारस्ते
मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भू-
र्मा ते सङ्गोऽस्त्वकर्मणि ॥
सर्वकर्मफलत्यागं
ततः कुरु यतात्मवान् ॥
काम्यानां कर्मणां न्यासं
संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं
प्राहुस्त्यागं विचक्षणाः ॥

तथा च वेदेऽपि —
'कुर्वन्नेवेह कर्माणि
जिजीविषेच्छतं समाः ।
एवं त्वयि नान्यथेतोऽस्ति
न कर्म लिप्यते नरे ॥'

त्रिविधं किल कर्म भवति —
I. कर्म, II. विकर्म, III. अकर्म
च । कर्मेदं पूर्वमीमांसायाः कर्म
नास्ति, यज्ञयागादीनां प्रवर्तितानां
मन्त्रकर्मकाण्डाः कर्म ।

नहि कश्चित्क्षणमपि
जातु तिष्ठत्यकर्मकृत् ।

इति कर्म तु सर्वदा सर्वैः करणीय-
मेव भवति, तथा च यत् कर्मणि
तस्य फलमपि अवश्यम्भवम् , अतएव
कर्मपथं जगदिदं कुटुम्बमिति
साधुभिः कथितम् । तदेव तु कुर्वन्
लोकाय एव एव स धन्यात्मा
निष्काम कर्म कुर्यात्, कर्म कुर्वन्

फलं नाभिकाङ्क्षति। यच्चाप्नोति पुण्यमपुण्यं वा तत्सर्वं प्रभवे सकललोकपालनप्रभवे कल्याण-नरूपाय जगदात्मने परमात्म-ने समर्पयति।

प्रसङ्गे च कर्मयोग प्रतिपाद-कान् कतिपयश्लोकानुद्धृत्य वयं समापयामः —

अनाश्रितः कर्मफलं
कार्यं कर्म करोति यः।
स संन्यासी च योगी च
न निरग्निर्न चाक्रियः॥

कार्यमित्येव यत्कर्म
नियतं क्रियतेऽर्जुन।
सङ्गं त्यक्त्वा फलं चैव
स त्यागः सात्त्विको मतः॥

योगस्थः कुरु कर्माणि
सङ्गं त्यक्त्वा धनञ्जय।
सिद्ध्यसिद्ध्योः समो भूत्वा
समत्वं योग उच्यते॥

नियतं कुरु कर्म त्वं
कर्म ज्यायो ह्यकर्मणः।
शरीरयात्रापि च ते
न प्रसिद्ध्येदकर्मणः॥

यज्ञार्थात्कर्मणोऽन्यत्र
लोकोऽयं कर्मबन्धनः।
तदर्थं कर्म कौन्तेय
मुक्तसङ्गः समाचर॥

एवं ज्ञात्वा कृतं कर्म
पूर्वैरपि मुमुक्षुभिः।
कुरु कर्मैव तस्मात्त्वं
पूर्वैः पूर्वतरं कृतम्॥

जन्म कर्म च मे दिव्य-
मेवं यो वेत्ति तत्त्वतः।
सदृशं चेष्टते स्वस्याः
प्रकृतेः ज्ञानवानपि॥

अहो! कियान् मधुर एष शब्दः। गरिमा खलु कियानस्य वाक्यसन्दर्भस्य! अहो सौष्ठवमस्य सूक्तस्य! कियद् भावभङ्गीत्वमस्य! को नु खलु वाचमिमामश्रुतपूर्वामनुवदति पुनः पुनः। यदुदीचि शशिसुधाशिवाट्टहाससितहिमगिरिमुकुटमणिमण्डितभालं मध्ये बहुलाहिनद्धश्रीखण्डवनशोभिविन्ध्यविद्रुतनर्मदामेखलकं कलकलनिनादमत्तमधुशीलसलिलसम्पन्नसुरसरित्पूतो पवित्रं धम्मिल्लसंदानितब्रह्मपुत्रदामं सरस्वतीकालिन्दतनयास्तआपवारकं गृहीतवासजनोचितवृत्तिकन्याकुमारिकं सततदर्शितन पारावारपदरजःप्रक्षालकं विभ्रमभ्रान्तविलासिजननन्दनवनकमनिगौरवापहासिसुरलोकं सुरासुरमनुजजनवन्द्यं भारतं तस्य यदि भवान् सम्राट् स्यात्। अलमलमतिवाच्यप्रपञ्चेन निशम्येव पुलकिततनुः पारयामि नं मातुमेतोवदात्मनि। न पुनर्जने स्यात् का दशा चेत् स्याम् भारतसम्राडिति। को नाम धन्यो मदन्यो भविष्यति!

आपूर्वपारावारादपरार्णवविसरामाहिमा-
चलाद्दाक्षिणोदधिमर्यादां शासित-
रि मयि सति शासति महीं मद्य-
मांसाशनपूतित्वमापन्नानां प्रत्यहम-
नेडमूकाविद्यागाधेनुवधिकानामनि-
शमीशरचनालालामार्यललनाहरण-
लालसाविकृतमानसां दुष्कृतिनाम-
नाचारास्पदानां कदर्थितकुकृत्यक-
र्दमार्यावर्तकासाराणां सदाचार-
विमुखानां लशुनकुक्कुटाण्डपल-
लाद्यमेध्योत्कृष्टाहारवेदिनां प्रति-
पलमनिमित्तमितरैस्साधुजनान्हन्तु-
मुद्यतानां अल्लाहु अकबरेतिभा-
षिणां जगति निखिलदुर्व्यवहारवी-
जानां निजेतरमतानुयायिनः तुच्छ-
तृणायावगच्छतां मतिहीनविद्या-
विद्वेषिणामपावनयवनानां बर्बरा-
णामरबान् सिकताभिस्तलस्त्य-
नरासुरशाखिविगलितप्रापपराग-
धूलिभिरिव सिकतिलान् प्रविरल-
तनुतुङ्गखर्जूरिमात्रवृक्षकान् दूरं दूरं
दुर्लभपर्णसंकरकटुतिक्तकषायक्षार-
जलान्, चतुस्थूणावलम्बमञ्चैरिव
कण्टकभुक्क्रमेलकैः व्यापृतान् नर-
कानिव दुःखशतसंकुलान् प्रतिपेष-
णां कर्म प्रथममितो यदि न मन्य-
न्ते मातरमिव भारतं स्वकीयां न
मुञ्चन्ति निखिलदुष्कृतकर्मजालं न
त्यजन्ति चेत् बालदुराग्रहग्राहिलत्वं
नोरीकुर्वते चेत् ससदाचारमनस्थिति
यदि न सेवन्ते साधुजनानुसृतसर-
णीं न परिगच्छन्ति पावनश्चेत्पन्था-
नं नाङ्गीकुर्वन्ति निजजनमिव चेदि-
तरराक्षान्तराक्षान्तरागिणं यदि न
विस्मरन्ति दीनासहायपशुहननं न
विदधाति चेदन्याबलाजनेषु भगि-
नीभावमिति । एष एवाधवाङ्गलानाम्
न मोहयन्ति यदि भारतीयव्यवस्थितिम्।
यत्सत्यं तेषामपि निर्वासनं -

## देव-गोष्ठी

भारतीयमतिमिव मलिमात्मनश्चेन्न प्र-
तिपादयन्ति। किं बहुना एषैव सरणिः
निःशेषार्यावर्तविस्तव्यानां यदि न
ते भक्त्या ज्ञातिपङ्क्तिबन्धं स्नेहसद्-
भावसहृदयत्वमुद्भावयन्ति। इतरथा
नेह तेषामवस्थाने संप्रीतिरस्ति। न
चिचेष्टते चेतस्तान् निर्वासयितुम्।
ससुखमास्यताम्। निःशङ्कं मम शा-
सनशय्यामधिशय्य वर्षसहस्रं स्वा-
पसुखमुपेयसुः। उद्घुष्यतां शासनमि-
दमार्यावर्ते - एष खलु न पिशाचा-
वर्त इति समाज्ञापयति सम्राट्। ए-
तदेव मनसि समाधाय ~~[illegible]~~
विदधाताखिलकार्यकलापम्। न का-
चिद्धानिरस्ति।

इत्थञ्चोज्झितसर्वदुर्व्यवहृतिगृही-
तशुद्धसंकल्पशान्तमानसेषु साधुजन-
मार्गानुगमनविस्मृतविपथगमनेषु
त्यक्तमिथ्यावादवराकवञ्चनवणिक्सा-
धुवृत्तिषु - विगततास्कर्यनिरस्तशुभ-
कर्मपाटच्चरेषु, व्यपगतमात्सर्येर्ष्याद्रोह-
दहनेषु, शमितकोपानलार्चिषु, निसृत-
वैररसेषु, सकलसत्कर्मसाग्रहग्रहणा-
ग्रहिलेषु सत्सु मानवेषु मम राज्ये दु-
र्व्यवस्थितिनिर्मितनगराणामपरमिदं वि-
ध्वंसनं विधेयम्।

सत्सु भूमिसात्पतनेषु, नगरनि-
र्माणनिष्णातैः शिल्पिभिः प्रत्यग्रपद्धति-
पुरःसरमनवलोकितपूर्वमतर्कितजन-
रचनमचिन्तितस्वप्नसंस्कारं नयन-
पथगमनमात्रविलोभनीयं निजानुपम-
विचित्राच्छदरापहासिततात्त्वकमणि-
लषित सततवासनासवमाकाङ्क्षितानि-
जनामाङ्कितोपलसन्नद्धभित्तिकुवेरं
प्रविरलसदनं पवनप्रवेशं भव्यभवनं
नगरं निर्मास्यते। न तत्क्रोशमधिकं
भविष्यति। तस्योपान्ते च निपुणतरैर्म-
तिमद्भिर्मालाकारैरनेकजातीयविटप-
विरचितं विविधकुसुमकुसुमितमनेकशः
फलफलितं कूजत्कोकिलरसालयुतं

गुञ्जच्चञ्चरीकविकचकोकनदनीलो-
त्पलपुण्डरीकस्वादुशीतलसलिलजला-
शयं षड्ऋतुरञ्जितमनूननन्दनवनं
नृत्यन्मयूरं रमणीयमुद्यानमेकं वि-
रच्यते। स्वैरं स्वैरं फलं यस्यास्वा-
द्यते नगरनिवासिभिरक्षतविधिना।
तदनन्तरं गव्यूतिमितागोचरभूमि-
र्यस्यां पीनोघ्न्यः गावश्चरिष्य-
न्ति कामधेनुतुल्या अपवारितं
जनाः यासां पयः पीत्वा पीवर-
तनवः सम्पत्स्यन्ते।

ततश्चात्युन्नतानेकानोकहं
विविधानिबिड़लतासन्नद्धशाखि-
संकुलं बहुनृशंसश्वापददर्पदं गर्ज-
च्चरद्गजघटाकुलितं नीरन्ध्रतरु-
तातिदुर्दिनं निबिड़मेकं काननं
भविष्यति। तस्मिंश्च - तपोवनमे-
कमननुभूतपूर्वमतिशयपूतं यज्ञ-
धूमधूम्रितगगनं क्रतुगन्धपूरित
ककुभचक्रवालं - पदमवाप्स्यति।

पदवलोकनेनैव पुलकिततनवो भवि-
ष्यन्ति जनाः अहो! महात्म्यं तपो-
वनस्य, सौन्दर्यं गुरुकुलस्य। प्रभावः
खलु तपोधनानाम्। धर्मो ननु धर्म-
व्रतिनाम्। कथमिव पावनता तपो-
वनस्य। सर्वत्रं रमणीयत्वम्। अहो!
शाखिनां मुनीनामिवातिथ्यम्। कथ-
मिव राजन्ते रोमन्थचरा अमित-
श्चत्वरभूमिं मृगाः। शोभनं खलु
प्रसृतसारमृगचर्म वहि गृहम्। आ-
तपाय बहिः प्रसारितनिवारकम-
मजिरमेतत्। अहो! कियत्सुरम्य
एष मार्गः। उभयतः पुष्पपुञ्जेषु चट-
काः चहचहायन्ते। अहा! झर्झरीति-
स्वनन्निर्भर एष कियन्मनोभः। द-
र्शनीयं खलु दृश्यमत्रत्यम्। इयं
रम्यता वनावलीनाम्। यत्सत्यं प्र-
कृतेर्गृहमिवेदम्। आह! चातुर्यं
विधातुः। अरे! कलकलनिनादिन्याः
सरितस्तट एष रम्यः। इमानि

## देव-गोष्ठी

सुन्दराणि उपलशकलानि, मध्ये २ च मर्मरीपत्राः। प्रान्ते च यत्र तत्र विकसन्तः सुमनसः। तेषु च मधुव्रततातिः। अतुलनीया शोभा। इतस्ततो धावन्तो हरिणाः। कमनीयनेत्राश्च परित्यक्ता मृगशावाः। क्वचिच्च मन्दं मन्दं चरन्तो जरठहरिणाः। केकां मुञ्चन्तो मयूराः। नृत्यन्तः कलापिनः। क्रेङ्कारवं रवन्तः क्रौञ्चाः। तेषाञ्च रक्तत्रोटयः। नीलिमगर्भितधवलगात्राणि च तेषाम्। अहा! विकचपुञ्जपूरितपद्माकरः। तस्मिंश्च कविकौतुकं संक्रान्तं ललनानां नयनमिव कोकनदः। मरकतमृदुदूर्वाप्रवालविस्तरम्। सर्वं खल्वेतत् तपोवनस्य शोभां द्विगुणां करोति। अहो श्वापदा अपि अत्र गाव इव प्रभावान् मुनीनाम्। नृशंसशबरा अपि साधुत्वमिव सेवन्ते इहागत्य। अत्र तु करालोऽपि कण्ठीरव क्रूरत्वं विस्मृत्य स्वशिशुमिव मृगं पश्यति।

अहो! महात्म्यं महात्मनाम्। यद्दुष्करं पौरजनानां तत् तपोवनेन सिद्धमत्र। मूर्तिमदिव सत्सदाचारमेतत्तपोवनम्। सत्यं यदाऽऽश्रम एवैतादृशः कथं न तर्हि वटुवैशिरत्नं भवेत्। यत्राचेतना अपि शिक्षावन्त इव शालीनतां भजन्ते। किमुत सचेतनानाम्। यस्य तिर्यञ्चोऽपि सौम्याः का तत्र कथा मानवानाम्। अपरः स्वर्ग इव स्थितमेतत्तपोवनम्। अहो! स्वयं सम्प्राऽपि अहं शीघ्रं पदमादधान गुरुकुले [illegible]। सफलो ममा- च मनोरथः।

"सत्यमेव जयते नाऽनृतम्"।
— वेदः —

"वायुपित्तकफास्तथा वायुग्निजलानि च"

श्रीयुत् ....... वर्णी .......

मानवदेहः खलु यैर्यैरुपादानैः पदार्थैर्विरचितः, भगवन्तो महर्षयस्तान् पदार्थान् सम्यक् विभज्य रसरक्तमांसमेदोऽस्थिमज्जाशुक्रनामधेयाः सप्तधातव इति अभिदधतिस्म। इमे सप्तधातवः पुनः जलवायुतापाः पुनः मिलिता सन्तो मानवदेहं विरचयन्ति, यथाहि बाह्यस्य जगतो जलवायुतापैः पृथिवीस्थाः, पृथिव्याभ्यन्तराश्च जलवायुतापाः परिपुष्टाः क्रियाशीलाश्च सन्तः यथा पार्थिवं वृत्तं व्यापारं संचारयन्ति, देहाभ्यन्तराश्च जलवायुतापाः तथैव बाह्यस्य जगतो जलवायुतापैः परिपुष्टाः क्रियाशीलाश्च सन्तः श्वासप्रश्वासरक्तसंचालनादीन् प्राणिकार्यविशेषान् समाचरन्ति। विवर्धयन्ति च स्वाभाव्यमुपादानसमूहं, सम्मिलयन्ति सह संयोजयन्ति तेषां सम्पूर्णं वृद्धिञ्च साधयन्ति। ततश्च यथाकालमनुमापानां कर्तृनिर्माणं देहं नियमयन्ति कुर्वन्ति, एतदेव दैहिकं स्वास्थ्यहेतुः।

दैहिकानां जागतिकानाञ्च वायुग्निजलानां सम्यक् तुल्यत्वे कार्ये स्वरूपतश्च लोके पार्थक्यं परिलक्ष्यते। अस्मादेव पार्थक्यात् जायते देहस्थस्य सोमस्य कफ इति, अग्नेः पित्तमिति वायोश्च वायुरिति नामानि विख्यातानि

# वृक्ष-गोष्ठी

यथाहि वाय्वग्नितोयसन्तरेण पृथिवी निष्क्रिया भवति, वाय्वग्नितोयात्मकं वायुग्निवारि-सन्तरेण देहोऽपि निष्क्रिय एव भवति। अत एव देहस्थाः कफपित्तवाताः एव विषनिदान-विशेषैः शरीरमिदं पालयन्ति। तेषु पुनर्व-पुष्पलत्वात् दोषधातुमलानां पारिपालितो निर्मितिजकार्यं निर्वहक्षम भवतीति शास्त्रविदां सर्वेषामेव सम्मतं मतम्।

## मानवदेहस्योपादानीभूताः

## (वायुतेजोजलपदार्थाः)

परिदृश्यमानाः खल्विमे जीवाः उद्भिद इव सततं नैसर्गिकनियमेन वाय्वग्नितोयात्मकं देहस्योपादानीभूतं स्वाभ्यन्तरतया पुष्टिं प्राप्नुवन्त्यः जीवन्तीति नाम्यस्य प्रपञ्ची-करणावसरे एवमस्माभिर्वक्तव्यं यदस्माकं देह-संघटनोपयोगिषु उपादानेषु मृत्तिकायां स्थितेष्वपि न वयं तानि मृत्तिकातस्तान्युपादानानि पृथक्कृत्य संघटनोपयोगितामानेतुमिदं शक्नुमः।

परं वृक्षा हि उद्भिदः अभूतपूर्वेण स्वाभाविकेन नियमेन यथा प्रकृति उपादानानि तेन स्वं स्वं देहं पोषयन्ति। इत्थं गृहीतोपादानाः खलु उद्भिदः शस्यरूपेण जीवानां गृहणभूमिकामां वर्तयन्ति। एतान्येवोद्भिज्जजातानि फलमूलकन्द प्रभृतीनि जीवानां जीवनानि भवन्ति। अपि तु फलमूलादीनि, जीवशरीरमूलकारणानि कुत्र विवर्द्धन्ते? अस्तीच्च यदिदं दशमासकसम्बन्धि बाल्ये चत्वारिंशत्पलगुणकं कुक्षिवर्द्धमानं तदेव शरीरं चतुःशतपलगुणकं पञ्चशत-पलगुणकं वा भवति। येन खलु जीव-देहे रसलोहितादयो दृश्यन्ते तेऽपि पुनरपि रक्तिव मलादिद्वारेण भवन्ति। ते हि अन्नादयः प्राक् वृक्षादिशरीरे व्यवस्थिताः। वृक्षादिशरीरेऽवस्थानात् प्राक् तर्हि ते मृत्तिकायामासन्। अतः खलु पुष्टविचारणमिदं एवम्-

## मानवदेहस्योपादानम्

स्मार्तिः स्त्रीरत्नं यत् सर्वं हि देहो-पादानं मृत्तिकानिर्मितमेव । तदुपरा-न्तं वाय्वग्नितेजोप्रभृतेन मृत्तिकातो रूपा-न्तरितं तत् देहस्य शरपूरणवृद्धि ता-पजोमोति भवतीति, पुनः एतादृश्चापि जीवजातानामपि प्रायः मृत्तिकात उत्पादाः । ततश्च जीवदेहे रूपान्तरीभवन्ति । मदुपा-दानः सर्वे खलु जीवाभिव्यक्तः स्थूल-देहा एव ।

अतएव पुरातनकालि स्मृतं यत् सर्वथा वाय्वग्नितोयाः एव पृथिव्याः सर्वं हि उपादानं विवर्तनक्रमेण रूपान्तरमत्वा पार्थिवं सर्वं कार्यं सम्पादयन्तीति, नास्ति सन्देहः ।

वायुपित्तकफाः सजीवपदार्थाः निर्जीवानि वायुतापजलानि गृह्णन्ति, अतोऽन्-त्तावेव वायुपित्तकफज्ञानमन्तरेण मानव-शरीरे प्रकृतिं विकृतिञ्च जिज्ञासुकामः

अन्यः कोऽपि उपायः ।

आयुर्वेदस्योन्नतिविधानाय ये किल महान्तः प्रयतन्ते ते धन्यवादाः । परमद्य सर्वत्रिकोन वर्तते वर्षं, कण्ठिप्रकाशस्मा सन्ताधित प्रशासितप्रान्तेषु च आयुर्वेदस्य प्रशंसा क्रियेत यद्यपि भवतं- वा प्रतीयते वैद्यानां कृते एवार्द्धचन्द्रोऽपि । किमत्र ननु भवतीं वसं वयं लोकानाम्? स्वगृहस्थान् वैद्यान् न कोऽपि पृच्छति अन्यैश्च पाश्चात्य चिकित्साधिकारिणान् ननु मानयन्ति सर्वे धिक् तान्!

सौरैव आयुर्वेद प्रफुल्लकृतादृवृद्धिः प्रसन्नो विगतिनाद मुः सं स्वस्य मातीयं मनत्तोषं पुनर्वप्रकाशमञ्जिणां समीपे प्रेषणीयं- वा पुनश्च निषधाय क्वचित् इति हि मे विचाराः । एतोदिविकासन्प्रयागमिति वदति ।

लोकेशजो वर्णी
गुरुकुलविद्या विद्यालय
30/4/1132

श्री वर्णी,
सम्पादकीय ।

श्री पं ब्रह्मानन्दो व्याकरणाचार्यः

रजतं कनकं धरणी च तथा,
मरणान्तपरं खलु यान्ति सह ।
सुकृतं हि ततः क्रियतां मनुजाः,
नहि नश्यति यत् कदाचिदपि ॥

स्थिता यस्य गर्भे प्रकाशाः समस्ताः,
स्थितो यस्त्वथाग्रे पतिः सर्व सृष्टेः ।
धृता सौम्परा येन च स्वप्रभावात्,
तमानन्द स्याद्रिदेवं भजामः ॥

प्रभात भानु प्रभया विबोधितं,
सरोरुहं न च्छवि रस्ति सा तुला ।
अनन्त विज्ञान रवि प्रभुप्रभां,
ल्लसत्सु या स्वं हृदयेषु योगिनाम् ॥

ध्रुवतैव किलात्र कारणम्,
ध्रुव! यत्वाभातिभास्वरा ऽम्बे ।
त्वयि ऋषयः समुपासते सदा,
नियताः सप्त समृद्ध मन्त्रयः ॥

दोषेषु वाचंयमतां वितन्वते,
विशारदाः सद्गुण वर्णने सदा ।
छिद्राणि चौरूण्यपि संक्षिपन्ति ते,
परस्य न स्वस्य सदाशया जनाः ॥

पिशुन! देव! नमोऽस्तु मुहुर्मुहुः,
सुपटवे परिवाद कलासु ते ।
तव महा महिमा नहि गोचरो,
जगति कस्य परस्पर भेदने ॥

क्षमा क्षितौ नाचलता साचले,
प्रभा न भानौ कुमुदे न कौमुदी ।
शमः प्रशान्तार्णव एव नाप्यसौ,
विराजते यो हृदयेषु योगिनाम् ॥

# देव-गोष्ठी

ददात्यात्म शक्तिं बलं यश्च देवो,
लभन्ते न पारं स्तुतेर्यस्य विज्ञाः।
यमेकं श्रयन्तोऽमृतत्वं लभन्ते,
तमानन्दरूपादिदेवं भजामः॥

यञ्चूर्यमाणः स्फुरपद्मकोशे,
यथानिशं गुञ्जति चञ्चरीकः।
तथा प्रभो रश्मि सुखं मनोमे,
रमेत तव गौरव गान सक्तम्॥

तत्रातिशीतलमरुल्लसिते प्रदेशे,
चिन्तामपारुह् दशेषजगद्रहस्यम्।
मायामये जगदिदं निरतं प्रपञ्चे,
शैले हिमावलि मिषेण हसन्निवाभात्॥

प्रलयमिव चिकीर्षन् सर्वलोकस्य सद्यः,
क्षयमिव जगतश्चाप्योधयन् अप्याब्धैः।
दशशत करिणोऽपि ध्वसंयेय क्षणेन,
स लसति मणिकरणौ पार्वती निम्नगौघः॥

कदम्ब सर्जार्जुन कन्दलाढ्या,
वनान्तभूमिर्मधु वारि पूर्णा ।
मयूरमत्ताभिरुत प्रवृत्ता ,
रागान्तभूमि प्रतिमा विभाति ॥

तडित्पताकाभिरलंकृतानां ,
सुदीर्घ गम्भीर महारवाणाम् ।
विभान्ति रूपाणि बलाहकानाम् ।
रणोत्सुकानामिव वानरणाम् ॥

मार्गद्रुमाः शैल वनानुसारी ,
संप्रस्थितो मेघ रवं निशम्य ।
पुच्छाग्निकास्य प्रतिनादशङ्की ,
मत्तो गजेन्द्रः प्रतिनिवृत्तः ॥

~~व्यपेत पङ्कासु सवालुकासु~~

~~व्यपेत पङ्कासु सवालुकासु प्रसन्नतोया~~

व्यपेत पङ्कासु सवालुकासु ,
प्रसन्न तोयासु स गोकुलासु ।
ससारसाराव विनादितासु ,
नदीषु हंसा निपतन्ति हृष्टाः ॥

# महात्मा गान्धि महोदयस्य

# सत्सङ्गः

प्रारब्धेषु स्वकीयगत इति नाम्ना प्रसिद्धात् । केनाऽप्याशुभ नासिन-
दीर्घविकारोऽयं निर- ऽऽशुभ नाविज्नहि ।
चिन्त्यं अहं यतो महा- यद्यपि मम पात्रे ईदृशमिममाशुभमधिकाव तत्रत्य
त्मनो नर्याशुभमनुष्य जीवन-चर्याध्ययनं तत्रस्य जीवन प्रकारैरेव च
तत्रस्य जीवन शिक्षां शिक्षयेति । एतत् मासद्वयं जीवनाति नाऽसंभूतम् । किन्तु तत्स्वकृहान्यैः
संपुष्पार्य कैश्चित्सच्चर्यैः सहाध्यायिभिः सद्भिर्न धर्मिमगात् । दिनत्रयं दिन-चतुष्टयमेवा
सार्द्धमितदुदिश्य एव प्रातिष्ठे । मुख्यावस्थित्यां ऽऽश्रमे न्यवात्सि तत्रत्य दिन-चर्या चचारि ।
द् द्वितीय दिन एवास्माभि वर्णनिगमात्सादि । तस्या वर्णनमत्र नासङ्गतं भविष्यतीति मत्वा
तत्रास्माकमाश्रमनिवास प्रबन्धस्तु कृतचर नर्पिषयत एवात्र सा अवस्थात्र "मसतार
स्वास्थीयति नयं स्वरराजादेव ('स्टेशन') सत्सङ्ग एव मुख्यो विषयः ।

अधुनाश्रमौ देशसेवासंस्थापितौ किमर्थं ग्रामेषु जागृति समुत्पादनाय कमपि प्रचारं
देशे भक्तांश्चोत्पादयितुं संस्थापितः श्रीमान् तु न विद्यते । एतस्यैतत्कारणम्
महाराष्ट्रदेशीयेन विनोबाभावे महोदयेन यत्र प्रचारं जागृतेः सफलमुपायमेव
आध्यात्म विषयं महात्म सम[illegible] न मन्यते । [illegible] तत्रत्यानामेष विचारो
महात्मनोऽनन्यानुयायिनौ । महात्म स्थापित यद् व्याख्यानादिना ग्रामेषु जागृतिः
साबरमती नामका श्रमभङ्गः एवायं समगतौ सुतरामसम्भाविनी । ग्रामीणा एवैतावान्
अधुनाश्रमौ वर्धा जनपद वर्तिनालवाडी" अविद्यान्धकारः प्रसृतो यत्र पारतन्त्र्ये
ग्राम विशेष एव वर्तेते न तु कस्मिं- एव सुखमनुभवन्ति, यः कश्च
श्चित् नगरे । भारतीय ग्राम जनता जागृतौ तान् कस्मैचिद्देश हिताय प्रेरयति तस्मि
सत्यमेव देशोद्धारो देशस्वराज्यलाभ न्नेव सन्देहमादधाति न च कदापि विश्व-
श्च संभवतीति विचार्यैव आश्रमौ सितुमुत्सुजन्ति यदयमस्माकं
यमाश्रमः संस्थापितौ न तु नगरे हितमेव कामयते । एवंविधे व्यतिकरे
इति मया तत्रत्य यतिभिः सहालपता- अस्माभिः पूर्वं ग्रामीणेषु विश्वास एव
ऽवाचि । एतादृशा अध्यासुमा वर्धा जननीयः, न ते किञ्चित्सत्याग्रह-
जनपद ग्रामेषु वर्तन्ते । अस आश्रमा किं कर्तुं प्रार्थनीया न वा ऽन्यस्मै

मूत्रस्थानमपि स्वयमेव संशोध्यते । शरीर परिश्रमानन्तरं सर्वथा रूक्ष भोजने-
ते कस्मैचिदपि स्वकमणं भृत्यान्नापं नापि मनुष्य: शक्तिमान् प्रबल:
क्षन्ते । एवं स्वावलम्बि तपोमय पुण्याङ्ग एव भवितुमर्हन्ति नीति । शरीर
जीवनमेव तैरति-वाह्यते यतो हि धारणाय प्राकृतिकमन्नमेवावश्यकमन्य-
न तद्धिता देशसेवका: कठिनव्रतम् -तद्विकारात्मकं तु स्वादमात्रयावश्यक-
परिपालयितुं पार्यते । रूक्षं भोजनम् मिति विविच्यैव ते लवणादिना
सर्वथा एव सात्विकं भवति । मिष्टं विकृतमन्नं हेयं स्वीकुर्वन्ति ।
लवणञ्चेत्युभयमपि तत्र नोपभुज्यते। एतादृशेऽस्मिन्नाश्रमेऽस्माभिरपि त्रीणि
मिष्टलवणविहीनमेवाश्नतं । ते हि चत्वार्येव वाऽहानि स्थित्वा तत्र
मिष्टादिकं नाश्नन्तं -तेजक्षिप्रभोज्य निवासस्थानाभावादन्यत्रैव तच्च श्रेष्ठि
पदार्थेभ्य: पृथक् कुर्वन्ति । तथापि श्री जमनालालो यतेऽस्थापि । तत्र तिष्ठ-
तेषां शरीरस्यास्मद्पेक्षया हृष्टपुष्ट त्वि रेवास्माभि महात्मानघोद्य समीपे
न्यालोक्य मया व्यचिन्ति यन्न वित्तोबाभावे संनिकाशे चाध्यात्म -चर्चापि
घृतादि पौष्टिक पदार्थ भोजना देव शरीरे विधातुमगम्यत । एकदाऽस्माभि र्महा-
शक्ति रुत्पद्यतेऽपि तु दिवानिशम् मता सह वार्तालापे चत्वार: प्रश्ना

गुरुरन्वीय सेवानेहसाऽस्माभि र्लब्धव्य वा सम्पद्यते इति। अतोऽस्माभि

इति। ~~यथा भक्तस्यायमेवाशयो यद्ययं~~ एतत् तु सदा ध्याने निधेयं यत्

~~तथा~~ यादृशोऽपि पुरुषोऽस्माभिर्धर्म- परमगुरुरीश्वर एव यः पूर्णो विद्यते

न विषयीकृत स्तादृशैरेवास्माभिरपि. साम्प्रतमयमेकः प्रश्न उपतिष्ठते यद्

भविष्यत इति। यथा भक्तस्याय गुरुः कीदृशः पुरुषो भवितुमर्हति

मेवाशयो यदयं तथा यौगिक्यांमर्हं मर्हति?। गुरुस्तु स एव यो.

यथा पाकादितो निवृत्तमन्नं भोक्ष्या गीता प्रतिपादितस्थितप्रज्ञ लक्षण सम्पन्नः

मह एवं यदाऽस्माभिः केचना दर्शं स्यात्। यस्मिन्नपि तानि पूर्वोक्तानि

गुणा अवाप्तव्यास्तद्, तद् गुणोद्दीप्ता लक्षणानि साकल्येन न भवेयुः स न

गुरोर्गवेषणं स्वाभाविकमेव। यान- गुरुपदभाग् भवितुमर्हः। कठिन

यानुभवान्वयं जिघृक्षाम स्तादृशानुभव निकषेणैव परीक्ष्य कश्चित्स्वगुरुत्वेनो

शालितोऽनुभवितृणां गुरोः परिग्रहः कार्यः। यस्मात्तादृशं गुरुसाक्षात्पि

कर्तव्य एव। यस्मेतत्तु न दृकेन न केनापि सत्पुरुषेन निवर्तव्यमपि तु

पि विस्मर्तव्यं यद् यन्मनुष्येण स्वलक्ष्यमधिगन्तुं सदा ततोऽप्युत्तस्या

सम्पादितं कर्म न सम्यक् फलं न्वेषणाय पुष्पतीयम्। तमेव सर्वोत्कृष्ट

सर्वगुण सम्पन्नं च स्वीकृत्य न सत्तो
प्रत्यं यद्यपि यावद् कस्य कस्यापि
शिष्यत्वे भूयेत स एव प्रच्छीयेत
विश्वस्येत, यत्किमपि तस्माच्छिक्षितुं
शक्येत सर्वमिप्या कुर्येत। यदा च मनस
स्तत्र सन्तोषं नोवाप्नुयात्सस्तदानीं
ततोऽपि महीयान्मार्गीयेत, स एव च
भक्त्या सेव्येत।
स स्वस्थ परिगृहीतो गुरुस्तु दोष
दूषितो दम्भाद्यनेक दुर्गुणोपेतोऽपि च
सम्भवति। एतादृश्यां दशायां तस्य
सुलक्षणान्येवास्माभिरुपादीयेरन् न तु
कुलक्षणानि। पुत्रेण पितुर्गुणा एव अनु
करणीयाः स्वस्मिंश्चाधानव्या न च
जातु दुर्गुणा अपि। एवं गुरोरपि

गुणान् गृहीतुमस्माभिः सर्वात्मना
प्रयत्येत।
अद्यत्वेऽपि गुरुकामेन प्रवृत्तो
योग्यं गुरुमन्वेषयामि। यदि सा
राष्ट्रियमहासभाया महत्तर दायित्वं
वरीवर्ति। एतादृशे कालेऽहं भृशं
चिन्तयेऽपि राष्ट्रिय महासभातः आत्मा
नं वियोजयेयं न वेति। यदि मया
कश्चिद् गुरुर्लभ्यते तर्ह्यहं तमिममेव
प्रश्नं पृच्छेयम्। यदि चासावादि
शेदेवं नियोतुं तर्हि मरिष्येव विद
च्यां सभातः सम्बन्ध विच्छेदम्।
यदि चासौ नाऽऽपयेत नैव कदापि
कुर्यामेवम्। यदाऽस्माभिः कश्चिद्
गुरुत्वेनाङ्गीक्रियते तर्हि तस्मिन् पूर्ण

# देव-गोष्ठी

श्रद्धा पूर्णश्च विश्वासः कर्त्तव्यं एवान्यथा कथः प्राकाशि । परमस्माभि रयं
तु कस्यचनापि लाभो न सम्भवति भवत्सिद्धान्तः स्पष्टं नावबोधि ।
यदि वयं ज्योतिर्विद्यामधिजिगांसामहे अस्य को नाम विशेष लाभः
तर्हि तस्या अध्ययनस्यैकं सुलभसाध कुतस्चैतदेव यत्र निर्मितवन्तोऽपि
नं ज्योतिर्विद्या पुस्तकानि सन्ति । तेषु क्षयोपादेयतरम् ?
पुस्तकेषु यस्यापि महती ज्योतिर्विद्या उत्तरम् - अहं हरिद्वनारायणेन
विदां विज्ञानं तस्मिन् पूर्णं प्रत्ययस्तु सदैवाभवितुमिच्छामि । सर्वैरपीक्ष्य
विधेय एव । समुपस्थितायां च तस्या मेव कार्यम् । दरिद्रांस्तान्भोजयित्वा
अपि तद्विषयक समस्यां तद्वीय पुस्तक ऽस्मामि भोक्तव्यं, तस्मादिति राघवन
मेवाश्रयितव्यं प्रत्येतव्यञ्च । एवम् च च स्व शरीरस्य नाण्यावरणीयानि ।
यदि केनाऽपि रोगिणा स्वचिकित्सायै एतदेव कारणं यत्नया एवदूरेऽच
कस्यचन वैद्यः प्रतियत्नस्तर्हि तेन तत्र न विश्वासः प्रकटी कृतः ।
चिकित्सां कुर्वन्ति छात्रा अपि त्यक्त्वा एतदपि सुतरां चिन्तनीयमपि
प्रश्नः :- भवता एवदूरे स्वकीयो कश्चिदन्य ईदृश व्यवसायो विद्यते
बलीयान् दुर्वीयांश्च विश्वासोऽनेन यः एवदूर व्यवसायापेक्षया ऽप्यल्प

व्यापकत्वन्तु अस्य । परमेवं विचारयन्त प्रत्यङ्ग अजानियत । अनुपेक्षा परं पुनः

एते गुरुयन्ते विचारदोषेण । तैरेतन्न कियन्तः सुधाराः सम्भविष्यन्ति ।

चिन्त्यते यत्युचारणेनैव तु रबड़मल्य एतच्चक्र प्रचालने यानानुसरणाकार

मूल्यं सम्भवति । एतदपि च निपुणं कुत्रचिदन्यत्रापि वर्तते किम् ? यादृश

निर्मलतीयं बुद्धिमत्स्विर्यत्रबदूरो त्वाद पुरुषस्त्वस्मिन् संगीतरव माकर्णयितां

नमप्येका विद्या तुकलावा । सम्प्रतं विद्यार्थिभिस्तु रबड़संयोगस्य शास्त्र

यात्राचक्रं (चक्रम = चर्खा इति भाषायां) मेव रचनीयम् । विद्यार्थिनां वि-

यात्रायामपि नेतुं शक्यं लघुचक्रं व्यापित्व गुणस्तु तदैव प्रकटी भवि

"यात्रा-चक्रेण निर्मीयते") रबड़र कर्षति एवंति यच्च त एतच्चास्य निर्मि

सिद्धान्त प्रेमिभिराविष्कृतम् । यदि याच्यते । कपासी कथमुच्यते

नामास्याभिरिति ध्यानमेव नादास्यन्त कीदृशी भूमिः कथञ्च प्रणिकादि

कथमेतादृशं सुन्दरमुपायं, सौकर्यं निर्माणपुरःसरं, तननीयमित्येवमादि

जनकञ्च चक्रं निर्मातुमशक्यत । सर्वमपि विद्यार्थिभिः कर्तव्यम् ।

अस्मासु पेक्षा वृत्तिं दध्यात्स्वपि प्राय अद्यत्वेऽपि मन्ये यत्रबड़ शास्त्र

मिक चक्र एतावति परिवर्तनानि मतीव गहनम् । यदि कश्चिन्मामेत्य

# हंस-गोष्ठी

कथयन्त्यन्ये तु मासेनैकेन स्वद्र पादयानीति क्रियानुष्ठीयते। राज
विषयं सर्वमपि ज्ञानमध्यगामीति नीतिक दृष्ट्या चायमाशयो यन्मन
तर्हि मंस्ये यदसौ गर्वितेति। स्वन्यत् कर्मणि चान्यदेव भवतीत्ये
तच्छास्त्रज्ञानतु जीवनमपेक्षते। हरिजना: यादृशोऽपि स्युस्तेष्मापि

प्रश्न:- गुरुकुलेऽधीयमाना वयम् सम्मेलनीया:। तेषु येऽत्याचारा
किं सर्वोत्तमं देशसेवाकार्यं कर्तुं क्षमा: अस्माभिराचरित तेषां प्रायश्चित्तम्

उत्तर- अद्यत्वे प्रत्येकं भारतीयस्य अनुष्ठेयम्। यदि ते दृष्ट्या अपि
दृष्टे त्रिविध कार्यस्य परमावश्यकता सन्ति तथाऽपि नाऽस्माभिरपि तै:
वरीवर्ति- तद्यथा (१) स्वधर्मोत्थ सह दृष्ट्वदेव व्यवहरणीयम्। पिता
त्रिस्त्यप्रचारश्च (२) हिन्दूमुसलमानौ ~~माम~~ भ्रात दृष्ट्यादपास्य यदि धर्म
वयम् (३) हरिजनोद्धार:। एतेष्वेव अपि भवेयु नयितु न तै: सह
त्रिषु कर्मसु सर्वमपि समाविशति। चतुर्थेन वर्तिष्यामहे। अस्मा
परन्त्विमान्यपि कार्याणि राजनी सह व्यवहारस्ते व्यवहारनयित्य-
तिक दृष्ट्या न कार्याणि। अद्यत्व धान्ति। मम सत्याहिंसयो: प्रचा
आनि कार्याण्यपि राजनीतिक पियो राय प्राधान्यत परं मनुष्याणां ते

प्राप्नुवन्ति धारयितुम्। अतो मया तु ईश्वर एव सर्वजगतो वेद्यकार तदर्थं एव जीवनमपि समर्पणीयम्। यदि तर्हि तु कर्मफल सिद्धान्त नाङ्गीक्रियते तदा : सफलशिक्षकः सं- स्य किं स्वरूपमवतिष्ठत इति वृत्तः। अहं स्वयमेव पूर्णाहितैषी नास्मि एव बोद्धुं पारयति। एवं जातो ऽस्मीत्यपि न वक्तुं क्षमो यदि धनी परश्च निर्धनैः कुतो भवत? पुरुषा एते नाकानुमीशास्तर्हि नात्र परमेश्वर एव यदि कर्म कारयति, ते दोषिणः। तैः प्रयतितव्यमेव कुतस्तत्फलमस्माभिरुपलभ्यते। इयञ्च ते भोत्स्यन्तेऽन्यो भर्मि। उत्तर - अहं वेदान्त सिद्धान्तमर्थे एतदहं न चिन्तये यतो जानन्तोऽपि न वीते कथयितुं नोत्सहे। अहम् मे उपेक्षन्ते।

प्रश्नः - अपि नाम भवान् गीता शास्त्र प्रतिपादित वेदान्त सिद्धान्त मेव पृच्छन्ति? यदि "भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया" इत्यादि गीता वचनानुसारं परमे

गीता प्रतिपादितं वादं मन्ये। गीताया अपि स्वकीयानर्थ विशेषान् गृह्णामि, स्वव्याख्यानुसारेण गीतां ग्रन्थं। नाहं कश्चिच्छास्त्रज्ञः। मया गीता स्वयमेवा ध्यगायि। गीताया अपि काचिट्टीका कश्चिद् भाष्यं वा ऽपाठीत्यपि नास्ति

नाहास्मि गदितुम् । गीतानुसारमह
मेतत्स्वी कुर्वे यद्यदि कश्चित्कर्म
फलमीश्वराय समर्प्य कर्म कुर्वीत
तर्हि तत्कर्म परमेश्वरेण भुज्यते
इति । तदानीं मनुष्येण तत्फलं
भोक्तव्यं भवति । किन्तु कर्मफल
कामनां सर्वथा परित्यज्य कर्म
करण एवैवं जायते ।

इति समाप्तम्

# महाराणाप्रतापसिंहः

रत्नप्रसूरियं भारतभूः पुरा बहूनि वीररत्नानि समुत्पादितवती। तेषु वीरप्रवरो महाराणा प्रतापसिंहोऽपि लोकविश्रुतो वर्त्तते। चतुःशतवर्षपूर्वं भारतदेशे यवनहतकानामेकच्छत्रमाधिपत्यमासीत्। दुराशयोऽकबरश्च तत्र निष्कण्टकं समराजत्। असौ निजसाम्राज्यं सुदृढमूलं विधाय निखिलानधीश्वरान् स्ववशंवदानकार्षीत्। ते मूढा लोभाभिभूताः सन्तो निजकन्यका अपि तस्मै यवनवराकाय प्रायच्छन्। परमस्माकं चरितनायको कथापुरुषः प्रतापसिंहस्तस्याधीनतां कुम्भीपाकज्वालावलीमिव मन्यमानस्तान्नाङ्गीचकार। तथा चेत्थं प्रतिजज्ञे यदहं स्वजनन्याः पवित्रतमं पयः न [illegible]कथमपि कलङ्कयिष्यामीति। शाकाहारं कन्दाशनं भूमौ शयनं मरणं वाऽपि वरं मत्वा विषपान इव विराजमाने पाकरसास्वादने दिव्याम्बरधारणप्राये श्ववृत्तितुल्ये पारतन्त्र्यपाशे न पतिष्यामि। परं धूर्तधौरेयो यवनावनिपस्तु रात्रिन्दिवं तस्य प्रतिज्ञामसत्यापयितुं प्रायतत। वराकोऽसौ शूरशेखरं तिग्मशरं प्रतापसिंहं स्ववशवर्त्तिनं कर्तुं नानाविधोपायानवलम्बे। बहुधा च निजसैनिकान् मेवारविजयाय प्राहिणोत् किन्तु न कदापि सफलतां लेभे। अथ द्वात्रिंशदुत्तरैकोनविंशतिशततमे वैक्रमाब्देऽकबरस्सम्राडम्बेरभूपतिं मानसिंहं सैनापत्ये नियुज्य प्रभुतरां विकटरूपधरां नानायुधसुसज्जितां चैकां चतुरङ्गिणीं मेवारं विजेतुं प्रस्थापयामास।

इतोऽस्माकं स्वल्पसाधनोऽपि प्रचण्ड-
बाधनो महाराणाप्रतापसिंहो तस्याः
साम्मुख्याय वृतपरिकरः सन् तत्प्रतीक्षां-
चक्रे। तदित्थमतितरप्रथिते हल्दीघाट
संज्ञके पार्वतीयप्रदेशे सुतुमुलं युद्धम-
भूत्। सैनिकानां सिंहनादैः समग्र-
भूधरा वेपमाना इव प्रत्यैपन्त। यव-
न पामराः प्रतिद्वन्द्विनामस्त्रप्रहारैः
क्लेशमापन्नास्तदभिमुखमवस्थातुं
न प्रसेहिरे। द्विषन्तपो प्रतापोऽपि
मुहुर्मुहुः शत्रूणामन्तः प्रविश्य संरूपा-
तीतान् रिपून् हत्वा तत्कालमेव
निजशूरसैनिकैरात्मबलमानीयते स्म
यवनसेनापतेरसंख्यवीराणां सत्यपि
शलभोचिते संहारे तस्य सैन्यं निक्षां
न ययौ। परं मेवारभूपतेः प्रतापिनः
प्रतापसिंहस्य प्रसर्पिभिरनामिता
ते परिगणिता वीरा प्रायशः समाप्तिं
ययुः। एतदालोक्य शूरशिरोमणिः
प्रतापो रणोत्सर्गमेव नीतिसंगतं
मत्वा समरात्पलायाञ्चक्रे। तदेवं
खलूदयपुरस्य पवित्रतमा भूमिः
शत्रूणां हस्तेगताऽभूत्। असौ वना-
द्वनं कन्दरातः कदराञ्च धावमानो
निजप्राणान् ररक्ष। यतो हि केवल-
मसावेव पर्यशिष्यत - अतः स्वमा-
तृभूमिं पराधीनतापाशान्मोचयितुं
तस्य जीवनं तस्मिंस्समयेऽदेयमा-
सीत्। एवमसौ स्वाभिमानी प्रतापि-
ललामभूतः प्रतापसिंहो बहूनि क-
ष्टान्यसहत। कदाचित्तु केवलं जलमेव
पीत्वा निर्वाहमकरोत् कदाचिच्च
भुञ्जानोऽपि शत्रुसेनामनुधावमानां
दृष्ट्वा भोजनं तथावत्परित्यज्य
अनिवार्यात्जीवनरक्षाञ्चक्रे। एकदा
स्वशिशून बुभुक्षया मरणोन्मुखान-
वलोक्यास्य दृष्टिरश्रुकलुषाऽभूत्-
हृदयपरिमाथिनी चास्यरुजाऽऽ-
विरासीत्। सम्प्रत्यसौ स्वप्रतिज्ञां
व्याहन्तुं निरणैषीत्। किन्तु
महाराजः पृथ्वीराजो महल्लज्जा-

स्पष्टं समाचारमेनं श्रुत्वा तत्कालमेव तं पुनः प्रोत्साहयितुं पत्रमेकं प्रैषिषत्। तस्य पत्रेण लब्धप्रोत्साहनः प्रतापसिंहस्तं दुर्निश्चयं तत्याज। असौ सम्यक्तयैतज्ज्ञातवान् यत् लोके प्रतिज्ञापालनं हि महत्त्वरक्षणं विद्यते - गिरयो युगान्तपवनाघातेन कामं विचलन्तु किन्तुं मम निश्चितं मनो न कदापि चलिष्यति। अधुनैव मे धैर्यस्य परीक्षावसरः सम्प्राप्तः यतो हि येषां चेतांसि विकारहेतौ सति न विक्रियन्ते त एव धीरपदवाच्याः न त्वन्ये। इति।

सत्ववतामीश्वर एव साहाय्यं भवतीत्युक्त्यनुसारं तस्मिन्नापत्समयेऽपि प्रतिज्ञापालनव्यापृते सति प्रतापसिंहे केनाप्यस्य पुरातनसचिवेन तस्मै तावद्धनं दत्तं यावता खलु द्वादशवर्षपर्यन्तं निर्वाहः समपत्स्यत। एतावदधिकं धनमुपलभ्य तस्योत्साहो बहुतरं प्रवृद्धः। शीघ्रमेव च स युद्धाय संघतस्थे। शनैः शनैश्च शत्रुवशंगतानि समग्रदुर्गाण्यसौ पुनरात्मसाच्चकार। परञ्चित्तौरदुर्गन्तु शत्रुभिः बलवदवरुद्धमासीत्। तेनावाप्तिरस्य सुकरा नासीत्। यस्मिन् समये वीराग्रणीः प्रतापसिंहः सिंहदुर्गस्य कूटमारुह्य नगरसौभाग्यमपश्यत्तदा शत्रुभिराक्रान्तं चित्तौरदुर्गं दृष्ट्वा तस्य हृदयं शोकशङ्कुना पर्यविध्यत। एवं च तस्य चिन्तानलदाघेनाक्रान्तहृदयेन वीरवरोऽसौ शीघ्रमेव क्षीणतरोऽभूत्। सप्तनवत्युत्तरपञ्चदशशततमे खीष्टीयाब्दे महाराणप्रतापसिंहो वैद्यविद्यापरिभाविना महता रोगेण समाक्रान्तः। आत्मानं मरणासन्नमवगम्य स निजमन्त्रिणः स्वसुतममरसिंहञ्चाहूय प्रोवाच— "अयि वीराः! यूयं जानीथ यन्मया खल्वाजीवनं यावन्मातृभूमेः स्वातन्त्र्यरक्षायै यानच्छक्यं समुद्योगो विहितः। न्यायकारिणः परमेश्वरस्य च कृपया प्रायशः सर्वाण्येव शत्रुगृहीतानि दुर्गाणि प्रतिपन्नानि किन्तु मम चेतसि सा-

म्प्युतमपि महद्दुःखं जायते। अतोऽहं युष्मान् कुलतिलकान्ब्रवीमि यद्युष्माभिस्तस्य दुर्गस्य पुनर्ग्रहणाय महान् यत्नोऽनुष्ठातव्यः। इयं रत्नगर्भा भारतभूमिश्च न कदापि शत्रूणां मलिनहस्ते दातव्या।" इति

एतदुक्त्वा भारतभास्करोऽसौ दर्शनोत्सुकैरमरैः समाहूत इव सुभूषितं सुरलोकं सम्प्राप्तवान्।

किन्तु निजैरसंख्यसद्गुणैरपार्थभौतिकेन विमलेन यशःकायेन जीवन्नसौ शूरशेखरोऽद्याप्यलङ्करोति पवित्रतमामिमां भारतभुवम्। तस्य सहस्रांशुसमप्रभस्य दीप्तजीवनेन सुखं चक्षुभिरस्माभिरिदं शिक्षणीयं यद्यपि आजीवनं यावत्कष्टानि समनुभवन्तोऽपि पराधीनतां नोरीकरिष्यामो—निजप्रियतमां भारतभुवञ्च दुष्टात्मनां पारतन्त्र्यपाशान्मोचयिष्याम।

= इति = —ओम्प्रकाशो मूलतानी

लेखकः

ब्र. देवराजस्त्रयोदशीयः —

विनीयतां भारतभारतीमिमाम् ;
गिरां सुरानां सततार्चनीयताम् ।
सुशोभितां दिव्यविचारराशिभिः ;
सुगुम्फितां सूक्तिभिरद्य गीयताम् ॥
यमाशशंसुः पुराणस्मृतयः ;
परः सहस्रैः सुसूक्तिजालैः ।

\+ + +

सहस्रशः वेदविद्वर्यैः प्रमाणिता;
नोऽपि नयेद्धि पूज्यताम् ॥
कवीन्दुकाव्येषु संल्लसन्ती;
रवीन्दुसौन्दर्य संस्फुरन्ती ।
मुनीन्दुमौनेषु भ्राजयन्ती;
नयेन्मनो नः खलु माननीयताम् ॥

+ + +

पुनः पुनः स्मारयतीव गौरवम् ;
तथा स्वकीर्तिं रिपुराशिनाशिनीम् ।
समर्पयन्तीमिव नव्यजीवनम् ;
स्वभारती श्रोत्रपुटै हिं पीयताम् ॥

+ + +

आषाढमासस्य दशम्यां तिथौ समण्डलीकोऽहं ग्रीष्मावकाशस्य मासमेकमतिवाहयितुं काश्मीरं प्रति प्रतस्थे। कांगड़ीगुरुकुलन्तु अस्मिन् ऋतौ स्वव्याधिप्रध्यानलोकेन् प्रसिद्धमेवान्यच्च मासद्वयमतिवाहयितुं नासीन्ममेच्छा गृहम्प्रति गन्तुमस्माद्धेतोः मया चिन्तितं यत् काङ्गडीगुरुकुले गृहे च निवासापेक्षया यात्रार्थं गमनं सुष्ठु वर्तते। अतो मया स्वयात्राव्ययार्थं पत्रं लिखितम्। किन्तु मम यात्रागमनप्रसन्नता दुःखे परिणताऽभूत्। यतो हि मम पितुः सकाशात् पत्रमागतम्। तस्मिन्नेवं लिखितमासीत्- "अस्मिन् ग्रीष्मावकाशे स्वगृहम्प्रत्येनागन्तव्यं त्वया"। परन्तु ममेच्छा नासीत् गृहं गन्तुमतो मया अन्यदेकं पत्रं स्वपितुः सकाशे लिखितम्। —

"अस्मिन् ग्रीष्मावकाशे स्वस्वास्थ्यलाभाय काश्मीरं गन्तुकामोऽस्मि, अन्यच्च आचार्यदेवशर्मामहोदयोऽध्यक्षो नो दलस्य।" एवं पत्रं लिखित्वा मम पिता यात्रार्थं गन्तुमादिदेश परन्तु यात्राव्ययार्थं किञ्चिदपि न प्रेषितमतो मया स्वगृहे गत्वाऽऽनीतं यात्राव्ययम्।

प्रथमतस्तावद्वयं हरद्वारस्टेशने धूमयाने आरूढाः लवपुरे, रावलपिण्डीनगरे विश्राम्यन्तः पेशावर्नामजनपदं प्राप्तवन्तः। रावलपिण्डीनगरात् क्रोशद्वयमतिवाह्य पर्वत-

फाङ्गुला ऽऽस्मो भवति। तस्मात्
स्थानात् पेशावर् नामस्थानं यावद्-
यं तैलयानेन गताः। द्विसप्तति-
क्रोशदूरं विराजत इदं सुरम्यं
स्थानम्। सर्वत्र बग्गुगोसादितरवः
विराजन्ते। बग्गुगोसाफलन्तु नव-
मृतम्। कल्पते यत् स्वर्गात् प्राकृ-
तिकमधुररसान् पुञ्जीकृत्य
रचितमिदं फलं विधात्रा। प्रत्यूष
एवास्मिन्नहनि 'खैबरदर्रा'-
नामधेयं सुप्रसिद्धस्थानंप्रति
प्रचलिताः। सर्वत्र पठान-
जाति मानवाः दृष्टिपथमायान्ति।
तत्र सप्ताहे द्वित्रिवारं धूम्रयानं
गच्छति। आंग्लसाम्राज्यस्य
सीमान्तमवलोक्य वयं पुनः पेशावर्-
नामकं स्थानं प्राप्तवन्तः। पठान-
जातिभयात् स्थाने स्थाने
गुल्मानि सन्ति- त्रिशतं
यावच्च राजपुरुषाः निवसन्ति।

प्रथमतस्तावत् 'तुरखान' नामकं
स्थानं पठानजातेरधिकार आसीत्।
आंग्लदेशवास्तव्याः कथितवन्तो यत्
जलाभावं पूरयिष्यामहे प्रथमतस्तु-
रखान स्थानमस्मभ्यं प्रदीयताम्।
तदा प्रभृति स्थानमिदमांग्लाना-
मधिकारे जातम्।

तुरखानसमीप एवाशोकस्य
दुर्गं वर्तते। तत्र वर्तमाने कूपे
अधर्मीजनाः स्वकृतपापफलं
भुञ्जन्ति स्म। तत्र वास्तव्यः प्रत्येको
जनः स्वसमीपे भुशुण्डिकैका गुलि-
काश्च निदधाति। न च कोऽपि
फोटो स्वचित्रं कस्माअपि ददाति।

दिवसद्वयानन्तरं वयं
'पञ्जासाहिब' स्थानं द्रष्टुं प्रचलिताः।
अस्य स्थानस्य विषये गाथैका
प्रचलिता वर्तते।

पञ्जासाहिबनामकस्थान-
समीप एव एको विशालः पर्वतो

वर्तते। तत्र कश्चिन्मुहम्मदीयो महात्मा निवसति स्म। एकदा स्वशिष्यैः सार्धं भ्राम्यन् गुरुनानकस्तत्र प्राप। पिपासार्तः शिष्यः एकः प्रोवाच। मरुस्थलमेवासीत् सर्वत्र। गुरुनानकेन स्वशक्त्या ज्ञातम्- यत् तस्मिन्पर्वतोपरि स्रोतो विद्यते तत्र गत्वा पीयताम्। यदा स पातुं स्वकरौ विस्तारयामास तदा मुहम्मदीयो महात्मा तं निषेधितवान्। अथ आगत्य तेन कथितं यत्तस्मिन् पर्वतोपरि कश्चिन्मुहम्मदीयो महात्मा निवसति स च मां निषेधितवान्। पुनस्तत्र गमनाय स स्वगुरुणा प्रेषितः। पूर्ववत् स मुहम्मदीयेन महात्मना निषेधितः। एवं कुपितो गुरुनानकदेवः स्वशक्त्या सर्वं जलमत्र आनीतवान्। अधुना शष्पाकीर्णा जाता भूमिः।

क्रोधेन देदीप्यमानः मुहम्मदीयो महात्माऽपि स्वक्रोधं शमयितुं पर्वतं भूमौ पपात। गुरुनानकदेवश्च स्वहस्तेनैव अरोधत्। अतः एव तस्य पञ्जासाहिबेति नामधेयम्।

दिवसद्वयानन्तरं त्रयोदश-ब्रह्मचारिणोऽध्यक्षेण सार्धं [struck out] 'तक्षशिला' नाम जगद्विख्यातस्थानमवलोकयितुं प्रचलिताः। एकस्मिन् समये स्थानमिदं विद्यायाः केन्द्रमासीत् परमधुना तदेव भग्नावशेषरूपे नः सम्मुखे प्रादुर्भूतम्। न तादृशी शोभाऽस्ति स्म। प्रत्येक ब्रह्मचारी आणकद्वयं दत्वा चित्रालय(म्यूज़ियम)मवलोकयितुं गतवान्। नानाविधवस्तूनि पश्यन्तो वयं पुनस्तैलयानमलंकृतवन्तः। तदनन्तरं तक्षशिलायाः भग्नावशेषान् द्रष्टुं प्रयाताः। तांश्च सम्यक्तयावलोक्य एबटाबाद नामकं स्थानंप्रति - प्रचलिताः।

सायं समयस्य पश्चादन काले एबटाबाद नामस्थानं प्राप्तवन्तो वयम्। रमणीयमिदं स्थानम्। ~~[illegible]~~ षोडशकलापूर्णं रचितं परमात्मना।

अन्यस्मिन्नहनि 'नवाँ शहर' नामके ग्रामे वर्तमानं 'गुप्तगङ्गा' नामकं प्रपातमवलोकयितु प्रयाताः वयम्। तस्य प्रपातस्य पयस्त्वतीव-निर्मलं शीतलं तथा च सर्व-शारीरिकदोषनिवारकं वर्तते। पलं यावत् ~~[illegible]~~ स्पर्तुं न शक्नोति कोऽपि जनः। अस्माभिरपि तत्र स्नानं कृतम्। प्रायशः सर्वे-एबटाबादवास्तव्याः जनाः स्नातुं तत्रागच्छन्ति। तत्पश्चात् प्रातः-समयस्य संध्यां कृत्वा प्रातराश-ञ्च विभज्य नथ्यागलीति नामधेयं स्थानं द्रष्टुं प्रचलिताः।

समुद्रपृष्ठान्नवसहस्र- (९००० फ़ीट) स्तोच्चं विराजत इदं सुरम्यं स्थानम्। एबटाबादनामकस्थानात् पञ्च (दश) क्रोश-दूरमस्ति। आसीत्पाषाणप्रचुरः राजमार्गः। पञ्चदशक्रोशमार्गं पद्भ्यां चलित्वा मार्गे च नाना-विधस्थानानि पश्यन्तः, सुस्वादु-शीतलञ्च जलपानं कुर्वन्तो मध्ये च हिन्दू आश्रमेति नामके स्थाने श्रीकृष्णजन्मोत्सवस्य दिवसं सफलीकुर्वन्तो वयं नथ्यागली-नगरं प्राप्ताः। सायं समयः ~~[illegible]~~ पुनश्च नीहारेऽ (कोहरा) प्लुते स्म सर्वत्र। ग्रीष्मर्तौ शीतकालः। तत्र च वयमेकस्मिन् गृहे स्थिताः - ~~[illegible]~~ (न्यूतिष)। शीताधिक्ये सत्यपि न केनापीशः स्मृतः। सायं समयस्य भोजनादिक्रियां समाप्य ~~[illegible]~~ मीलित-नेत्राः वयम्। प्रातः कालस्य पश्चा-दादनकाल उत्थाय मुखादिप्रक्षालन-पुरस्सरं क्रियां विधाय तथा च

# देव-गोष्ठी

स्वस्वप्रातराशमादाय 'नथगली'-स्थानादवनतवेलायां 'कोहमरी'-नाम पदम्प्रति प्रचलिता: वयम्। 'नथगली' स्थानात् पञ्चक्रोशदूरं विराजते रमणीयमेकं सरः। सर्वतः अयसा निर्मितं वर्तते। 'कालांबाग'-नामधेये स्थाने, एकादशशतसहस्रो-च्चे दांगलागलीत्यभिधेये स्थाने विश्रान्ताः सायंसमयस्य षड्वादन-काले कोहमरीनामजनस्थानं प्राप्ताः। अवर्णनीया शोभा विद्यते।

जलधिपृष्ठादेकादशसहस्र-हस्तपरिमितमुच्चं विराजत इदं रमणीयं स्थानम्। तत्र च वयमार्यसमाजे स्थिताः अभूवन्। प्रायश आंग्लजातीया जनाः निवसन्त्यत्र। एबटाबादस्थानन्तु नाममात्रमपि न रमणीयमभूदुद्दिश्य। प्रागेव पत्रमेकमार्यसमाजप्रधानाय प्रेषितमासीद्, ततस्तत्र गत्वा सायं-समयस्य संध्याहवनादिकार्यं समाप्य भोजनं भक्षयितुं गताः। किञ्चिद्विश्रामानन्तरं निद्रादेव्याः अङ्कं प्राप्ताः। २

एवं भ्रमतिगच्छत्सु कति-दिवसेषु श्रीनगरनामधेयजनपदम्प्रति प्रयातास्तैलयानेन। एबटाबादस्थाना-च्छ्रीनगरं कोहमरीं यावत् (सप्तविंशति-क्रोशदूरम्) पद्भ्यामेव गताः। द्विदिवसद्वये तैलयानमुपसर्पति श्रीनगरम्। यतो हि शतमेकं क्रोशदूरमस्ति स्था-नमिदं पुनश्च वक्रं वर्त्म। अतो मध्ये 'गढी' नामधेये स्थाने रात्रिं यावत् स्थित्वाऽन्यस्मिन्नहनि श्रीनगरं प्रति प्रयाताः। स्थाने स्थाने बगु-गोसादिफलमास्वादयन्तः प्राकृतिक-दृश्यानि चावलोकयन्तो वयं श्रीनगरं प्राप्तवन्तः। अवर्णनीया शोभा भविष्य-

१ त्यस्याः स्थितेः एवं मह्यमचिन्तयम्

परन्तु न तादृशी शोभाऽऽसीत्। तत्र वर्तमाने 'शालबाग' इत्यभिधेये

स्थाने स्थितिरासीदस्माकम्। तत्र च
गुजराँवालागुरुकुलब्रह्मचारिणोऽ
पि निवसन्ति स्म। आर्य-
समाजे नासीन्नः स्थानं यतस्तत्र
काङ्गड़ीगुरुकुलब्रह्मचारिणामवस्थान-
मासीत्। तद्गुलं दिवसमेकपूर्वमध्या-
सीनः दलात्। यवनाः प्राचुर्येण
निवसन्ति तत्र। यवनजात्या सह
पूतिगन्धभावस्तु नूनमेव भवति-
नास्त्यत्र संशयलेशस्यावकाशः।
यवनानामधिकसंख्या निवसति श्रीनगे।
अस्माद्धेतोः दुर्गन्धेन प्रताडिता वयं
बहुकालं यावत् स्थितिं नाकार्ष्म।

दिवसद्वयानन्तरं -

प्रचलिताः वयं 'शालामार, निशात,
चश्माशाही' इत्यादि सुप्रसिद्धोद्या-
नानि द्रष्टुम्। सर्वाण्येतानि स्थाना-
नि डलाख्ये सरसि तीरे सन्ति।
रविवासरदिवसे एतेषां शोभा। अतः
प्रायशः सर्वे रविवारे प्लवे स्थित्वा तत्र
गच्छति। सायंसमयं यावत्
सर्वाण्येतानि स्थानान्यवलोक्य
आगताः वयं स्वस्थानम्प्रति।

काश्मीरस्य विवरणम् -

अस्ति समस्तभूमि-
मण्डलभूतीयमालो भवभेषजभाण्डागार-
भूतस्य, विविधकुसुमलताप्रतान-
पादपावलिसंवलितस्य, ललित-
निर्झरप्रपातनिनादितस्य, रवि-
किरणच्छुरणेनातिरमणीयस्य,
सेवबब्बूगोसादिविविधचारुफल-
भारावनताग्रविटपैर्हरितपलाशो-
ल्लसितलोचनैः पलाशिभिर्वि-
लसितो विविधभोजनपानादि-
सम्भारभरितबहुजननिवासविल-
सिताभिर्महातरणिभिः सकलजन-
हृदयैः सहृदय इव, आर्यावर्तदेश-
स्य स्विट्ज़रप्रदेश इव, ग्रीष्मर्तौ
सकलजननिवासहेतुत्वात्प्राणाधारः
इव, हरितविटपीप्रतानसंवलिता-

# देव-गोष्ठी

हरितशाटिकालङ्कृता कन्येव तरुशाखा सुचारुफलविहितकलादिभिरिव, निखिललोकलोचनान्याकर्षयन्विराजते काश्मीराभिधानो जनपदविशेषः।

तत्राहं सर्वतः पर्वतपरिवृतां, उन्नतमस्तको त्प्लुत्योत्प्लुत्यावेक्षणपुरस्सरां, पङ्क्तिस्थितेषु वृक्षावलीनिकुञ्जैः व्याप्तां, गगनसङ्काशविशालां, महासागरसमभागधां, मत्स्यबहुलां तथा च तरङ्गैर्विक्षुब्धां डूलराभिधानां सरसीं, तोयाधिक्यापूरितसलिलां, सर्वतः इन्दीवररक्तोत्पलविलसितां, निष्कल्लोलकलकलां मौनव्रतधारिणीमिव, सकलजनहर्षोत्पादिकां मानसबलाभिधानां सरसीं न्यशामयम्। एवमेवोत्तरोत्तरबहुविटपीविलसितं, दुर्गमं, बहोंगलदेशीयजनरचितहर्म्यं, नवसहस्रहस्तोच्चं गुलमर्गाभिधानं पदं तदुपरि कनकमनीयकूटशैलखण्डपरिवृतं, सकलश्रीनगरदर्शनेनानुङ्गिमानं, सर्वतः बहुलश्रेणीवद्धवल हिमखण्डैः रजतनिर्मितदुकूलपरिवेष्टितदिशमिव खिलनमर्गं, विमलसलिलां रजनिर्झरिणीं विनचाति च रमणीयोद्यानान्यदर्शम्।

एवं ग्रीष्मावकाशस्यांशमेकं समाप्य तस्य चोत्तरभागमतिवाहयितुं द्वितीयदलस्य प्रतीक्षामकुर्वमहि वयम्। तद्दलमस्माभिः षड्दिनपूर्वमेवाश्रमं प्रति गतमासीत्। तस्य दलस्य द्वौ ब्रह्मचारिणौ पहलगामाभिधानं स्थानं यावत् गत्वा श्रीनगरं प्रतिनिवृत्तौ। तथापि नो दलं वैश्वानरेशलभवल्लिराशं नाभूदपि तु तत्र गमनोत्कण्ठा दृढीभूता। 'विपत्तिकाले पापि हीनमतिः' इत्याभाणका मुक्तेवात्र। एवमतिगच्छति सप्ताहे एके न किञ्चिदपि वृत्तान्तमवगतम्। अतः

वयमपि सज्जीभूताः शेषस्थानम-
वलोकयितुं । श्रीनगरात् चतुश्च-
त्वारिंशत्क्रोश दूरं विराजते 'पहल-
गाम'नामकं स्थानम् । मध्याह्ने
तैलयानोपर्यारूढाः मटनानन्त-
नागादिस्थानान्यवलोकयन्तः पञ्च-
वादनवेलायां प्राप्तवन्तः पहलगामा-
भिधानं स्थानम् । तैलयानावरोहण-
समकालमेव केचन ब्रह्मचारिणो-
दृष्टिपथमगुः । षोडशब्रह्मचारिषु
दशैव ब्रह्मचारिणः अमरनाथं यावत्
गतवन्तः । अहं स्वमनस्यचिन्तयं -
यदा इमे स्वस्थाः ब्रह्मचारिणो
न शक्ताः शेषस्थानं गन्तुं तदा
मादृशकृशब्रह्मचारिणां तु कथा-
वशेषैव । तथापि नूनं गन्तव्य-
मेव ।

न शक्यते वर्णयितुं
गिरस्थानमवर्णनीयां शोभाम् ।
सर्वतो देवदारुविटपिभिः परिवृत-
मस्ति । समीप एव कलकल-
शब्दं कुर्वन्ती नदी प्रव-
हति । तं मञ्जुलदृश्यमवलोक्य
स्तोत्रमेकं वारं वारं मम
कर्णशष्कुलीं पूरयति स्म ।

"उपह्वरे गिरीणां संगमे
च नदीनां धियो विप्रोऽ
जायत ।"

यदि पुण्यश्लोकः
श्रीस्वामी श्रद्धानन्दमहोदयो
भ्रम्यनागमपि केनचित्प्रकारेण-
यास्यत्तर्हि नूनमेव द्वितीय-
गुरुकुलाधारशिलामस्थास्यदे-
वमहमचिन्तयं स्वमनसि ।

परितः सकलाम-
पादपैर्विलसितं पहलगामनाम-
स्थानम् ।

एवं दिवसद्वयानन्तरं
प्रचलिताः वयं 'चन्दनवाड़ी' इत्य-
भिधानं पदम्प्राप्ति । शतद्वयमुत्ता-
नवसहस्रहस्तोच्चं विराजते
स्थानमिदम् । पहलगाम नामक-
स्थानात् षट्क्रोशदूरमस्ति ।

# देव-गोष्ठी

तङ्गौका सरित् विद्यते यस्य धारा-
द्वयं क्रमशः लवणशर्करोदकयोः
विभक्तम्। महदाश्चर्यम्। अपारा-
परमात्मनः लीला। तस्याः
नद्यास्तीरे एका मृता गौः आसीत्।
तां मृता इति ज्ञात्वा तेन
च सह स्वचित्रं जिघृक्षवो वयं
दण्डैर्निष्कासयितुमीहामकार्ष्म। किन्तु
सफलतां न गताः।

अन्यस्मिन्नहनि प्रयाताः
वयं पञ्चतरणिनामकं पदम्प्रति।
एकादशसहस्रहस्तोच्चं वर्तते स्था-
नमिदम्। मध्ये वायुजनेति नाम-
धेयं पदमस्ति। तत्र च सर्वतः
हिमगिरिखण्डैर्व्याप्तं, कल्लोलकलकलं,
गगनचुम्बदिन, गगनसमसुविशालं,
निखिलहिंसकशरीरिणां प्राणाधारं
शेषनागनामकं सरः। किञ्चित्काल-
मतिवाह्य स्वोद्देश्यमनुकृति प्रस्थिताः।
चन्दनवाडी नामस्थानात् दश-
क्रोशदूरमस्ति पञ्चतरणि नाम-
स्थानम्। तथा च 'वायुजन'
नामस्थानात् पञ्चक्रोशदूरम्।
सरणिरियं द्वादश होरां यावद्
उल्लङ्घिता ऽस्माभिः। यतः प्रथ-
मतस्तावत्पर्वतोपर्यारोहणं
पुनश्च शिरसि वेदलोत्पादि-
का भातिश्खा। कर्पूरं
जिघ्रन्तो वयं लङ्घितोऽयं
मार्गः। अस्मिन् मार्गे वृक्षाणा-
न्तु नाममात्रमपि न लभ्यते।

क्रोशद्वयानन्तरमा-
रोहणं समाप्याधुनावरोहणं
प्रारब्धमस्माभिः। अवरोहणा-
पूर्णं वर्त्म वर्तते त्रयोदश-
सहस्रहस्तोच्चम्। सर्वत उन्नत-
हिमाचलशृङ्गैः परावृतमस्ति।
सम्मुखे च कोलाहलं कुर्वत्यः

पञ्च धाराः प्रवहन्ति। दर्शकसहस्रहस्तोच्चं विराजते पदमिदम्। केनाचित्सुकोणे रात्रिभोजनं समाप्य शयनार्थं गताः। कम्बलद्वयेन नयेण ना रात्रि अतिवाहिता। प्रातः काले पञ्चवादनसमय एव प्रयाताः वय-ममरनाथम्प्रति। पञ्चतरणी नाम-स्थानात् क्रोशद्वयं दूरमस्ति। न जाने के के विचाराः समायान्ति स्म मम चेतसि। स्वलक्ष्यं दूरादेवावलोक्य प्रफुल्ल-मनाः सोऽहं किञ्चित्कालं निस्तब्धो भूत्वाऽतिष्ठम्। हिमनिर्मितसेतु-द्वयं नयं वातिवाह्य तथा च फर्लाङ्गमेकं दूरं गत्वा प्रविष्टाः वयं तस्यां कन्दरायाम्।

तत्रामरनाथे विशालैका कन्दरा वर्तते। तस्यामेक-स्मिन्पार्श्वे हिमनिर्मितं शिवलिङ्गमस्ति। श्रूयते यत् - तच्छिवलिङ्गं चन्द्रकला-समकालमेव वर्धते क्षीयते च।

होरैकामतिवाह्य तस्मि-न्नेव दिवसे 'चन्दनवाड़ी' नाम पदं प्राप्ताः वयम्। तत्र रात्रिं यावत् स्थित्वा पहलगामनामधेयं स्थानं कुर पुनश्च श्रीनगरम्।

सितम्बरमासस्य विंशत्यां तिथौ प्रचलिताः वयं 'जम्मू' नामकं स्थानम्प्रति। अपोद्यु: स्यालकोटजनपदं सम्यक्तया विलोक्य लवपुरं प्रस्थिताः। लवपुरात् स्वस्वगृहेषु गत्वा तेषु च ग्रीष्मावकाशस्य मास-मेकमतिवाह्य प्राप्तवन्तः कांगड़ीगुरुकुलम्। किञ्चित्काला-नन्तरञ्च पठनक्रिया-पूर्ववदारब्धा।

(पालीभाषातोऽनुवाद:)

## राजोपदेश-जातक

(वीरेन्द्रस्त्रयोदशीय:)

अतीते वाराणस्यां ब्रह्मदत्ते राज्यं कुर्वति सति बोधिसत्त्वस्तस्य अग्रमहिष्या: कुक्षौ प्रवेशसन्धिं गृहीत्वा लब्धगर्भपरिहार: स्वस्ति मातु: कुक्षेर्निरक्रमीत्। नामग्रहणदिवसे पुन: स ब्रह्मदत्तकुमार इत्येव नाम अकार्षीत्। आनुपूर्व्येण वय: प्राप्त: षोडशवर्षकाले तक्षशिलां गत्वा सर्वशिल्पेषु निष्पत्तिं प्राप्य पितुरत्ययेन राज्ये प्रतिष्ठाय धर्मेण समं राज्यमकार्षीत्, स्वच्छन्दवशेन अगत्वा विनिर्णयमन्वशात्। तस्मिन्नेवं धर्मेण राज्यं कुर्वाणेऽमात्या अपि धर्मेण व्यवहारं व्यरूरुचन्, व्यवहारेषु धर्मेण विनिश्चयमानेषु कूटार्थकारका नाम नाभूवन्। तेषामभावात् अर्थार्थिपि राजाङ्गणे शून्यं प्राक्षीयत। अमात्या दिवसमपि विनिश्चयस्थाने निषीद्य कंचिन्निनिश्चयार्थमागच्छन्तमदृष्ट्वा प्रक्रामन्ति। विनिश्चयस्थानं (Court) छर्दितव्यभावं प्राप्तम्। ~~स्थानीं मम आत्म~~ बोधिसत्त्वोऽचिन्तयत् - मयि धर्मेण राज्यं कुर्वति विनिश्चयार्थिन आगच्छन्तो नाम न सन्ति, उपरव: (शून्यं, शान्ति:) प्राक्षीयत। विनिश्चयस्थानं छर्दितव्यभावं प्राप्तम्,

इदानीं मया आत्मनोऽवगुणं परिवेष्टुं वर्तते, 'अयं नाम
मेऽवगुण इति ज्ञात्वा तं प्रहाय गुणेष्वेव वर्तिष्यामि।" ततः
पश्चात्- 'अस्ति खलु मे कश्चिदवगुणवादीति परिगृह्णातः
अन्तःपुरे कंचिदगुणवादिनमदृष्ट्वा आत्मनो गुणकथामेव
श्रुत्वा जनपदं परिग्रहीष्यामीति अमात्येषु राज्यं 'एते मम
मध्येनापि अगुणमनुक्त्वा गुणमेव वदेयुरिति बहिरन्तःपुरात्
परिगृह्णानस्तत्रापि अदृष्ट्वा अन्तर्नगरं पर्यगृह्णात्,
बहिर्नगरात् चतुर्षु द्वारेषु दुर्गग्रामकान् पर्यगृह्णात्। त-
त्रापि कंचिदगुणवादिनमदृष्ट्वा आत्मनो गुणकथामेव श्रुत्वा
जनपदं परिग्रहीष्यामीति अमात्येषु राज्यं प्रतीष्य रथमा-
रुह्य सारथिमेव गृहीत्वा अज्ञातकवेषेण नगरान्निष्क्रम्य
जनपदं परिगृह्णानो यावत् प्रत्यन्तभूमिं गत्वा कंचिदगुण-
वादिनमदृष्ट्वा आत्मनो गुणकथामेव श्रुत्वा प्रत्यन्तसीमातो
महामार्गेण नगराभिमुखो न्यवर्तत। तस्मिन् पुनः काले
मल्लिको नाम कोशलराजोऽपि धर्मेण राज्यं कुर्वन् अगुण-
गवेषको भूत्वा अन्तःपुरादिषु अगुणवादिनमदृष्ट्वा
आत्मनो गुणकथामेव श्रुत्वा जनपदं परिगृह्णानो तं
प्रदेशमगमत्। तौ उभावपि एकस्मिन् निकटे संकटमार्गे
अभिमुखौ अभूताम्। रथस्य उत्क्रमणस्थानं नासीत्। अथ
मल्लिकराजस्य सारथिर्वाराणसिराजस्य सारथिं 'तव
रथमुत्क्रमय' इति आह। सोऽपि भो सारथे! तव रथं

## देव-गोष्ठी

उत्क्रमय, आसन् (यो) वाराणसीराज्यस्वामी ब्रह्मदत्तमहाराजो निषण्ण इति आह । इतरोऽपि यो सारथिः । आसन् (यो) कोशलराज्यस्वामी मल्लिकमहाराजो निषण्णः, 'तव (यं) उत्क्रमय अस्माकं राज्ञो रथस्य अवकाशं देहीति आह वाराणसीराजस्य सारथिः 'अयमपि किल राजा एव किन्तु खलु कर्तव्यमिति चिन्तयन् 'अस्ति एव उपायो वयः पृष्ट्वा दहरतरस्य (अल्पतरस्य) रथमुत्क्रमय महल्लरस्यावकाशं दास्यामीति विनिश्चित्य (निश्चयं) कृत्वा ते सारथिं कोशलराजस्य वयः पृष्ट्वा परिगृहणन्नुभयोरपि समानवयोभावं ज्ञात्वा राज्यपरिमाणं बलं धनं यशो जातिगोत्र कुल अपदेशमिति सर्वं पृष्ट्वा 'उभावपि त्रियोजनशतिकस्य राज्यस्य स्वामिनौ समानबलधनयशोजातिगोत्रकुलापदेशा इति ज्ञात्वा शीलवत्तरस्य अवकाशं दास्यामीति चिन्तयित्वा स सारथिः 'युष्माकं राज्ञः शीलाचारः कीदृश इति अप्राक्षीत् । स अयं च अयं च अस्माकं राज्ञः शीलाचार' इति आत्मनो राज्ञोऽवगुणमेव गुणतः प्रकाशयन् प्रथमां गाथामाह-:

दृढं दृढस्य क्षिपति मल्लिको मृदुना मृदुम् ।
साधुमपि साधुना जयति असाधुमप्यसाधुना ॥

एतादृशोऽयं राजा मार्गादुदयाहि सारथिन् इति।
तत्र दृढं दृढस्य क्षिपतीति - यो दृढो भवति बलवान्

दृढेन प्रहारेण वचनेन वा जेतव्यस्तस्य दृढमेव प्रहारं वचनं वा क्षिपति, एवं दृढो भूत्वा तं जयतीति दर्शयति, मल्लिक इति तस्य राज्ञो नाम। मृदुना मृदुमिति - मृदु-पुद्गलं स्वयमपि मृदु भूत्वा मृदुनैव उपायेन जयति। साधु-मपि साधुना जयति असाधुमपि असाधुना इति - ये साधवः सत्पुरुषास्तान् स्वयमपि साधुर्भूत्वा साधुनैव उपायेन, ये पुनरसाधवस्तान् स्वयमपि असाधुर्भूत्वा असाधुनैव उपायेन जयति इति दर्शयति। एतादृशोऽयं अस्माकं कोशलराजः शीलाचार एव रूपो मार्गादुदयाहि सारथिन् इति आत्मनो ये मार्गादुत्क्रम्य उदयाहि उत्पथेन याहीति अस्माकं राज्ञो मार्गं देहीति वदति।

अथ तं वाराणसीराज्ञः सारथिः 'भो किं पुनस्त्वया आत्मनो राज्ञो गुणाः कथिता इति उक्त्वा 'आमिति' उक्ते यदि एते गुणा अवगुणाः पुनः कीदृशा इति उक्तवान्। 'एते तावत् अवगुणा भवन्तु, युष्माकं पुनः राज्ञः कीदृशा गुणा इत्युक्ते तेन शृणुहीति द्वितीयां गाथामाह -:

अक्रोधेन जयेत्क्रोधं असाधुं साधुना जयेत्।
जयेत्कदर्यं दानेन सत्येनालीकवादिनम् ॥

एतादृशोऽयं राजा मार्गादुदयाहि सारथिन् इति।

तत्र एतादृश इति एतैरक्रोधेन जयेत्क्रोधमिति

आदिवशेन उक्तैर्गुणैः समन्वागतः, अयं हि क्रुद्धं पुद्गलं स्वयमक्रोधो भूत्वा अक्रोधेन जयति, असाधुं पुनः स्वयं साधुर्भूत्वा साधुना, कदर्यं स्तब्धमत्सरिणं स्वयं दायको भूत्वा दानेन, अलीकवादिनं मृषावादिनं स्वयं सत्यवादी भूत्वा सत्येन जयति, मार्गादुद्याहीति सौम्य सारथिः मार्गतोऽपगच्छ एवंविधशीलाचारगुणयुक्तस्य अस्माकं राज्ञो मार्गं देहीति अस्माकं राजा योग्य इति ।

एवमुक्ते सति मल्लिकराजस्य सारथिश्च उभावपि रथादवतीर्य अश्वं मोचयित्वा रथमपनीय वाराणसीराज्ञो मार्गमदत्ताम् । वाराणसीराजो मल्लिकराजस्य नाम 'इदञ्च इदञ्च कर्तुं वर्तते इति उपदेशं दत्वा वाराणसीं गत्वा दानादीनि पुण्यानि कृत्वा जीवितपर्यवसाने स्वर्गपदमपूपुरत् । मल्लिकराजोऽपि तस्य उपदेशं गृहीत्वा जनपदं परीत्य आत्मनोऽवगुणवादिनं अदृष्ट्वा च स्वकं नगरं गत्वा दानादीनि पुण्यानि कृत्वा जीवितपर्यवसाने स्वर्गपदमेव अपूपुरत् ।

## बालनक्षत्रघुष्टवस्तु (उत्सवविशेषः)

एकस्मिन् हि समये श्रावस्त्यां बालनक्षत्रं नाम घुष्टम् । तस्मिन् नक्षत्रे बालदुर्मेधोजना चारिकया (राख से) गोमयेन च शरीरं मृष्ट्वा सप्ताहमसभ्यं भणन्तो विचरन्ति, तस्मिन् जाति-

सौहृद्ये वा प्रव्रजिते वा दृष्ट्वा लज्जमानो नाम नास्ति, द्वारे स्थित्वा असभ्यं भणन्ति, मनुष्यास्तेषामसभ्यं श्रोतुमशक्नुवन्तो यथाबलं अर्द्धं वा कार्षापणं वा प्रेषयन्ति। ते तेषां गृहे लब्धं लब्धं गृहीत्वा प्रक्रामन्ति। तदा पुनः श्रावस्त्यां पञ्चकोटिमात्रा आर्यश्रावकाः (बुद्धश्रावकाः), ते शास्तुरन्तिकं प्रैषयिषुः, भगवन् भदन्त सप्ताहं भिक्षुसंघेन सार्द्धं नगरमप्रविश्य विहार एव भवतु इति। तं च पुनः सप्ताहं भिक्षुसंघस्य विहार एव यवागुभक्तादीनि सम्पाद्य स्वयमपि गृहान्न निरक्रमिषुः। नक्षत्रे पुनः पर्युषिते अष्टमे पुनः दिवसे बुद्धप्रमुखं भिक्षुसंघं निमन्त्र्य नगरं प्रवेश्य महादानं दत्त्वा एकान्ते निषण्णाः भदन्त अतिदुःखेन नो सप्त दिवसा अतिक्रान्ताः। बालानामसभ्यानां शृण्वतां कर्णाः भिद्यमानाकारप्राप्ता भवन्ति, कश्चित्कस्यचिन्न लज्जते। तेन वयं युष्माकमन्तर्नगरं प्रवेष्टुं न अदाम। वयमपि गृहान्न निरक्रमिष्मेत्याहुः। शास्ता तेषां कथां श्रुत्वा बालानां दुर्मेधसां क्रियाणां नाम एवंरूपो भवति, मेधाविनः पुनः धनसारमिव अप्रमादं रक्षयित्वा अमृतमहानिर्वाणसम्पत्तिं प्राप्नुवन्ति। इत्युक्त्वा इमे गाथेऽभाषिष्ट -:

प्रमादमनुयुञ्जन्ति बाला दुर्मेधसो जनाः।
अप्रमादं च मेधावी धनं श्रेष्ठं च रक्षति ॥
मा प्रमादमनुयुञ्जीत मा कामरतिसंस्तवम्।
अप्रमाद्यन् हि ध्यायंश्च प्राप्नोति विपुलं सुखम् ॥

## देव-गोष्ठी

ब्र० हंसराजो दशमस्थः

भवभीति भञ्जकं भक्तमानवदुःखदुर्गुण हारकम्
वसुधासुधारवि-चन्द्रपालकमीश्वरं भुवधारकम् ।
वनवीथिकाकृतवांसमेकमनेक संकटतारकम्
प्रणमामि सम्प्रति सर्वमानववन्दितं श्रीजनायकम् ॥१॥

वनसुन्दरं तृणधान्यवृक्षफलावृतं सुखदायकम्
जनदेववन्दनशोभितञ्च तिरस्कृतेन्द्रपुरप्रभम् ।
नवपङ्कजैर्नवपुष्पकैरति सुन्दरं मणिसंभृतम्
तरुसंकुलं वनसंस्तृतं, पशुपोषितं जनवन्दितम् ॥२॥

शशिसूर्यतेजसि संस्थितं, हिमपर्वतै रतिसुन्दरम्
धनधान्यरत्नविशालकानन संकुलं गिरिसंवृतम् ।
मृगसेवितं हयार्चितं शिखिजार्चितं हरिसंकुलम्
मुनिपादपद्मपवित्रितं गिरिशृङ्गकैरुपशोभितम् ॥ ३ ॥
शुभयाश्रितं हरिणाश्रितं, मुनिनाश्रितं, भवसुन्दरम्
फलपुष्पगुच्छभराजितैस्तरुभिः श्रितं सुरकीर्तितम् ।
प्रथितं सदा भजसा हृदा कथितं च संस्कृतिभासुरम्
प्रणमामि सम्प्रति सर्वमानववन्दितं शुभभारतम् ॥ ४ ॥
हरिनर्दितं गजगर्जितं मृगसेवितं शिखिनर्तितम्
हयहेषितं कपिकूर्दितं शुकसारिकापिकपूजितम् ।
पनसाम्रतालतमालचन्दन शाल्मली लकुचाकुलम्
कदलीकदम्बमधूकचम्पकनिम्बबिल्वक संवृतम् ॥ ५ ॥
सुलवङ्गदाडिमपीलुभिस्सरलैश्च कुन्दनपादपै-
श्च नवैर्द्रुमैर्वनचम्पकागुरुभूर्जबब्बूलपाटलैः ।
सहकारपिप्पलनारिकेलसमावृतं स्फटिकावृतं
शुभभारतं मुनियोगिवन्दितपादपद्ममुपास्महे ॥ ६ ॥

(१)

अथागते शुभ्रतुषार-वर्षिणि,
क्रमेण हेमन्तऋतौ समन्तात् ।
उपस्थिता तत्सममेव वार्षिकी,
परीक्षिका हन्त! चिर-प्रतीक्षिता ॥

(२)

याता समाप्तिं ऋतु पिशाचिनीसमा,
सुदीर्घ-कालं परिशोषिणी वपुः ।
हर्षातिरेकाच्च समन्ततस्ततः,
क्रीडन्ति बाला[1] स्वकृतोभया इव ॥

१. छात्रा इत्यपि पाठभेदः ।

(३)

एवं व्यतीतेषु कथं कथंचित्,
दिनेषु सप्ताधिक सप्तविंशतिः।
सर्वत्र संफुल्ल मनोज्ञ मंजरी,
समागतो लोकप्रियो वसन्तः॥

प्रयागस्थ कुम्भमेला वर्णनम् -

(४)

मौहूर्तिकैः द्वादश वर्ष संभवो,
महत्प्रयत्नात् निश्चितावधिः।
घटेति पर्याय पदोप लक्षितः,
कुम्भः प्रपेदे कलिकालशापः॥

(५)

संप्राप्त वन्तः धन राशि पुञ्जाः,
प्राप्ता हरिद्वार पुरीं मुमुक्षवः†।
जन्मान्तरेष्वर्जित पाप पुञ्जान्,
प्रक्षालितुं जान्हवि वारि मज्जनैः॥

† मुमूर्षवः इति पाठान्तरम्

## दूव-गोष्ठी

(६)

इतस्ततो दिक्षु प्रसारिताः सिताः,
वितान जालाः शरदभ्रशोभिनः।
पदे पदे पर्णकुटी रवकसाथा,
जनाकुला पञ्चपुरीत्थमासीत् ॥

(७)

महार्हरत्नैः ओरिलांस प्र.ष्पाः,
कपोलपाली परिलिप्त गन्धा।
गजावली मेघघटा घना इव,
जनाम्बुधेः काञ्चन प्रादुरासीत् ॥

(८)

तुरङ्गमा मोटर वाहनानि-
रथाश्च शुभ्राः शकटाश्च भूरि।
पद्भ्यां सरन्ती च प्रभूता नागा-
वली तथान्ये कपरावधूताः ॥

(९)

सन्ता महन्ताश्च ततश्च केचित्,
पंडाश्च नागाख्य दिगम्बरास्तथा।
निर्वाणपुरासीन निरञ्जनीः पुनः
कुमान्निसस्तु गजपृष्ठ संस्थिताः॥

(१०)

मासैक कालं समभूदहर्निशम्,
समन्ततः सम्मदसंप्रसारः।
आसीच्च शोभा नयनाभिरामा
रोडी प्रदेशस्य विशाल शाद्वले॥

(११)

ततश्च प्राक् खाण्डवदाहदक्ष -
चिराद् बुभुक्षाकृशितः कृशानुः।
पापान्यशेषानि स लोल-जिह्वया
जग्रास संव्यात्त मुखोऽतृप्तः॥
स्य

अथ पड्भि विविध दल सज्जा प्रयाणादि वर्णनम् :-

(१२)

जाते च तस्मिन् सुमहोत्सवे कुमार-
दिनात्ययुः सत्वरमेव नाशम् ।
दीर्घावकाशे त्वथ छात्रवृन्दं
विनिर्ममेऽनेकदलानि प्रत्यहम् ॥

(१३)

ज्येष्ठस्य मासस्य ~~श्री~~ हि पंचमे दिने
रवौ च वारे दशवादने तु ।
दलस्य पश्चाम्बुप्रदेश जिगमिषोः
प्रयाणकालः समुपस्थितः क्षणात् ॥

(१४)

ततश्च केचिद्वसुधावतीर्णाम्
पुरीमिवेन्द्रस्य मनोज्ञदृश्याम् ।
काश्मीर इत्येव जगत्प्रसिद्धाम्
~~हिमाद्रि संवेष्टित~~
प्रतस्थिरे शुभ्र हिमाद्रि वेष्टिताम् ॥

(१५)

ततश्च कुल्लूविजयाय सज्जम्,
अवरङ्जीवस्य+रवा परं बलम्।
समग्रसामग्रिसमेतमद्भुतम्,
काष्ठामुदीचिं प्रति संप्रतस्थे।

(१६)

गतेषु सर्वेष्वपि बालकेषु,
सुस्वल्पसामग्रियुताः सुवीराः।
शिमलेति काकाधिप* राजधानीम्,
विसर्गपुरके (१०) मिताः प्रतस्थिरे॥

(१७)

नमो नमस्ते भगवन्नमस्ते!
शिवा भवन्तु भवतां च मार्गाः।
स्नेहो पादिग्धैं जयिकानादै-
ज्वाला पुरान्मित्रगणै विसर्जिता॥

* ~~[illegible]~~
काकाधिप = वायसराय

(१८)

याने च स्वैरं सरति स्वमार्गे
मध्ये वनं वै गिरिराजराजिते।
चक्रा स्निग्धै नैव वर्ष सीकरै-
मार्गाभिषेकं खलु मेघराज: ॥

(१९)

नेत्राभिरामै नर्व वल्लरी युतै:,
परिस्फुरत्पल्लव पाटलाभै:।
द्रुमै: समन्तान्नितरां निविड़ित:
सभापयुर्दृष्टिपथं वनान्ता: ॥

(२०)

x क्षणाच्च वृष्टि: समभूत् ~~[illegible]~~धृष्या
x वातै ~~[illegible]~~ हि वातायनमार्गगामि-भि:।

क्षणाच्च वृष्टि: समभूदधृष्या,
वातै र्हि वातायन मार्गगामिभि:।
म्लानिं ययौ स्वेदमयश्च पूर:
समागते दून[1]पुरी प्रदेशे ॥

१ दून = देहरादून

(२१)

ततश्च राजावधिरोप्य तत्पुरम्

सद्यः प्रतस्थुः रमणीयमार्गात् ।

समाप्य राजपुरं सुरम्यम् :

चक्रुश्च तत्रोदरपूर्तिमापणात् ॥

(२२)

~~जाते धने श्वासतलं [illegible]~~

कृतातपत्राः घनगिरिधामधेयैः

प्रवीजिताः शीतसमीरवीचिभिः ।

गोष्ठीकथोदीरणलब्धितोषणाः

प्रारेभिरे पर्वतराजयात्राम् ॥

( अपूर्ण )

---

# परतन्त्रदेशे शिक्षा

शिक्षास्वतन्त्रतयोर्घनिष्ठः सम्बन्धो वरिवर्ति। यदि कस्मिंश्चिद्देशे एतादृशी शिक्षा दीयते यतस्तस्याः स्वदेशस्य स्वातन्त्र्येतिहासं सामाजिकेतिहासं चापि न ज्ञातुं शक्नुवन्ति तर्हि तस्याधिकाः, सामाजिका राजनीतिका वा कथाचिदपि दृष्ट्योन्नति न सम्भाव्यते। यदि कस्मिंश्चित् परतन्त्रदेशे स्वतन्त्रदेशेतिहासः स्वदेशीय प्राचीन वीरेतिहासश्च नाध्याप्यते तर्हि तत्र स्वतन्त्रताविषयकोऽभिलाष एव नोत्पत्तुमर्हति। तन्नाय एतदपि ज्ञातुं प्रभवन्ति यत् स्वातन्त्र्यपारतन्त्र्ययोः किमन्तरम्? किं नाम पारतन्त्र्यम्? कीदृशमासीत् दुःखम्? स्वातन्त्र्यस्य कोऽभिप्रायः किं च तस्य सुखमित्यादि विषयकं ज्ञानमेव तेषां न भवति, स्वातन्त्र्य कामनायाः कथा तु दूरमास्ताम्।

यदाऽपि कश्चिद्वैदेशिको राजा

कस्यापि देशं शासितं तत्र च स्वकीयं स्थिर-शासनं
चिकीर्षति तर्हि स तत्रत्यानां शिक्षां सामाजिक-राज-
नीतिकादि इत्येवा ऽपाङ्गं विदधाति, यथा ऽऽङ्ग्लैरस्माकं
देशे व्यधायि। अत एव शासक विद्यालय महाविद्यालय
प्रभृति संस्थासु या शिक्षा प्रदीयते तस्या राष्ट्रेण
सह मनागपि सम्बन्धो न विद्यते। विदेशीय राज्ञां
मन्त्रिणाञ्च वैदेशिकानामन्यधिकानां, कांश्चिच्च चरित-
दिग्दर्शन कारिण्यः कथा विद्यालयेषु पाठ्यन्ते परन्तु
बुद्धयंकरयो: कथा उपनिषदां साधारणबोध-
कथा:, प्राचीन साहित्यं वीरत्वगाथा:, न
केवलमिता: प्राचीन कथा एवापि तु नाति
प्राचीन वीर 'वैरागीबन्दा' - गुरु गोविन्द सिंह -
लक्ष्मीबाई सदृश शूरवीराणां शौर्यकथा न जातु
कोमलधियां बालानां कर्णकुहरयो: प्रवेश्यन्ते।
यश्च स्वदेशेतिहासो ऽध्याप्यते सोऽप्येतावद्दूषितो
यद् भारतीयानां बालानां यूनां वा मनःसु

देव-गोष्ठी

स्वदेश प्रेम स्वकीय संस्कृति प्रेम च यदमपि कर्तुं न पारयति । शिक्षितानां भारतीय यूनां स्वदेशापेक्षया विदेशीय वीर पुरुषाणामन्येषाञ्च महापुरुषाणां चरित्रे, विदेशीय सभ्यता संस्कृत्योश्च महा श्रद्धा महती चाभिरुचिः संजायते । एतादृश्यामवस्थायां कथं भारतीय युवकाः स्वराष्ट्र भक्ता भवितुमर्हन्ति कथञ्च ते स्वराष्ट्रभावनामेव-बोद्धुमीहन्ते ? राजकीय विद्यालयेषु च इतिहासः पाठ्यते तस्मिन् मठमन्दिर निर्माणतिथयः भिन्नभिन्न युद्धकाल निर्देशाः, विजेतृविजित काल प्रतिपादनमयमात्रं च न किञ्चिदपि दृश्यते ? विद्यार्थिनः एतन्न ज्ञातुं प्रभवन्ति यद्भिन्नभिन्नयुगेषु कीदृश्यः सामाजिकार्थिक राजनीतिक परिस्थितयः समुत्पद्यन्ते कथं कथञ्च तासां प्रतिविधानं व्यधीयतेति ।

एतादृश्या उत्तर दायित्वं भारतीय शिक्षाविभाग संचालकेषु दार्शनिकेषु च

वेविद्यते । ते जानन्तोऽपि स्वदेशीय बन्धून्
शासककृतामिमां शिक्षादशां न बोधयन्ति । वर्त-
मान शिक्षया: प्रायशो बाल्यदेशीयानां चेतःसु
स्वदेश गौरवं तत्पुनरुद्धाराय स्फूर्तिश्च नोत्पद्यते ।
सम्प्रति देशोद्धारस्य विविधकार्येषु शिक्षा-
प्रकारपरिवर्तनस्यापि प्रधानं स्थानम् । शिक्षाया
राष्ट्रीयकरणं न केवलं परतन्त्रदेशाय कृते
आवश्यकमपि तु सर्वेषामपि देशानाम् । यदि
स्वतन्त्रदेशेष्वपि शिक्षाऽभावः, स्वराष्ट्र रक्षा
रता शिक्षा वा भवेत्तर्हि तेषामपि स्वातन्त्र्यं
न चिरस्थायि भवितुमर्हति । स्वल्पेनैव कालेन
तेषां राज्यं परहस्त गतं दृश्यते ।

रूस देशेऽपि जार शासने
वर्तमान भारतदशा येदृश्या न काचिदुन्नताऽवस्था-
ऽऽसीत् । किन्तु रूसीय राज्य क्रान्त्यनन्तरं
यदा लेनिनमहोदयेन प्रजातन्त्र शासनस्य प्रधान
प्रधानपदमलङ्कृतं तदा रूसदेशे शिक्षा-

## देव-गोष्ठी

विषये ऽत्युपयोगि व्यापक परीक्षणानि प्राप्यन्त।
अस्य च स देशः शिक्षाप्रसारेणैवेत्युन्नतः
संसार प्रसिद्धश्च संवृत्तो यत्र तं कश्चित्केऽप-
मिदपि चक्षुरुन्मीलयितुं वा ऽलम्।

अत्रत्यो देशे शिक्षाक्रमो शत-
कैनैव निश्चीयते। तत्र च न केवलं बालकेभ्यो
ऽपि तु वृद्धेभ्यः परिणतवयस्केभ्यो ऽपि शिक्षा
ऽनिवार्यतया प्रदीयते। तत्र शिक्षाया निम्ना-
ङ्गानि :—

(1) विद्यालये प्रवेशात् प्राक् प्रा-
मिकी शिक्षा। अष्ट वर्ष वयस्कानां कृते यथा।

(2) उच्च शिक्षा

(3) Extension classes माध्यशिक्षा
च।

(4) पुस्तकपत्रपत्रिका प्रकाशनम्।

(५) अद्भुतागार (Museum) पुस्तकालय नाट्यागारादि स्थापन शिक्षा।

(६) परीक्षणात्मक विद्यालयाः।

(७) ग्रामेषु वाचनालय स्थापनं तत्र सर्वसाधारण शिक्षणं च।

(८) नागरिक कर्मकरा (मज़दूर) णां संघ (Trade union club) निर्माणं, तेषां प्रत्यहं निश्चितं शिक्षा प्रबन्धश्च।

(९) कम्युनिस्ट संघ संघटनं समाज सेवक (Scout) च शिक्षणञ्च।

(१०) सेनावर्ति सैनिकानां समाज विज्ञानस्य शिक्षा सांस्कृतिकी शिक्षावश्यकी।

(११) पारस्परिक सहायता - स्वच्छता - कृषिविषयकस्य प्रचारः।

## देव-गोष्ठी

इमे सर्वेऽपि शिक्षाविभागा
बालान् मनुष्यान् विदधति मनुष्यांश्च वास्तविक
नागरिकान् सम्पादयन्ति। स्वतन्त्रे स्वदेशे तु
शासक द्वारैवेदं सर्वं प्रबध्यते परन्तु कश्चित्
परतन्त्रो देशः कथमेतत् सर्वं कर्तुमप्रति-
बन्धं क्षमते ? वस्तुतस्तु देशे स्वतन्त्र एव-
तादृशं सर्वं राष्ट्रोपयोगि शिक्षाकार्यं
सम्पादयितुं पार्यते किन्तु परतन्त्रेऽपि
किञ्चिदल्पमात्रिकं वाऽनुष्ठातुं शक्यत
एव। यदि देशे प्रतिनगरं प्रतिग्रामञ्च राष्ट्रि-
यशिक्षालयाः धार्मिकशिक्षालयाश्च न
जनतया स्वयं संचाल्येरन्, तर्हि देशे
शीघ्रमेव जागृति जायेत जागरिता च
भारतीया जनता पुनरपि स्वातन्त्र्यसुख-
मनुभवेत्, सकलदेशशिरोमणौ भारतस्य

# साहित्यमहत्ता

श्री विनयकुमारः

ज्ञानराशेः संचितं कोशमेव साहित्य इत्यभिदधाति जनः। आविर्-निहिताखिलभावप्रकाशनयोग्यता-पद्धौ, निर्बाधि स्वकीय मौलिक-साहित्यविरहिता वाग्देवी लावण्य-वतीवनितेव न कदापि सम्मा-नमधिकरोति। मौलिकसाहित्यमेव तस्याः शोभायाः आदरस्य चाधारः। यदि कुत्रचिज्जातिविशेषस्यो-च्चावचविचाराणां, धार्मिकभावा-नां, सामाजिकस्थितीनां, रीति-आख्यानां, राजनैतिकप्रगतीनाञ्च प्रतिबिम्बमुपलभ्यते तर्हि साहित्य-ग्रन्थ एव। साहित्यमेव निर्णायकं सामाजिकाः शक्तेः जीवनस्य वा, तद्दौर्बल्यस्य मृत्योर्वा, सभ्यता-या असभ्यताया वेति। यदि कस्याञ्चिज्जातौ साहित्याभाव-स्तन्न्यूनता वा दृश्यते तर्हि— निःसंशयमेव ज्ञायते यत् सा असभ्या अपूर्णा वाऽस्तीति। यादृशी यस्याः सामाजिकी स्थिति-रेतादृशं तस्य साहित्यम्। जातीनां क्षमता सजीवता च साहित्यदर्पण एव प्रतिबिम्बिता चाक्षुषप्रत्यक्षविषयी भवति। साहित्यस्य प्रयनदर्शनेनैव जातिविशेषस्य वर्तमाना भूतकालिकी च जीवनशक्तिः प्रतिपत्तुं शक्यते।

उदाहरणार्थं — आहारत्यागं करोतु भवान्, अथवा स्वल्पमात्रायामाहारं गृह्णातु, भवच्छरीरं कृशं भविष्यति। अ-चिरेणैव च विनङ्क्ष्यति। एवं च यदि भवान् स्वां धियं मनो वा साहित्यकल्पतरो रसा-स्वादनाद्विधाकरोतु, निष्क्रिय-

एवं अपितु आवश्यकतायां
अनुकूलतायां अवकाशे चापी-
त्यनेकभाषाज्ञानमर्जनीयम् ।
तात्पर्यमिदं यत् महाज्ञानराशिः
संचेतव्यः । द्वेषस्तु न कदापि च-
दपि विधेयः । ज्ञानं तु – "बाला-
दपि गृहीतव्यं युक्तमुक्तं मनीषिभिः"
इत्यनुसारं ग्राह्यमेव । परं स्वीये
भाषासाहित्ये च प्राधान्येन —
गणनीये । यतोहि – स्वस्य
स्वदेशस्य, स्वजातेश्चोपकारः

卐 卐 卐

卐 卐 卐

कल्याणञ्च स्वकीयभाषायाः
साहित्येनैव सम्भवति । ज्ञान-
विज्ञान-धर्मराजनीतीनां च
भाषया लोकप्रसिद्धया भवि-
तव्यम् । अतः स्वभाषायाः सा-
हित्यसेवा अभिवृद्धिश्च –
सर्वथापरमर्था इत्यवेत्य
करणीया । इत्यलं पल्लवितेन
विदुषां पुरस्तात् ।

# गीतिका

ले. हंसराजो वर्गी दशमस्य :

भारत! * चरण सरसिजं वन्दे ----------

रम्यमुदारं सौरभसारं , शीत्य समीरै कृत रसभारम्

सौरभं विभवसु विशदम् , वन्दे --- भारत! चरण.

शतशत देवैं रपि कृतमानम् , मधुकर गीतैं रनुगतरागम्

मानव सुहृदय वन्दितम् , वन्दे --- भारत! चरण.

नवमणि पुञ्जैः रञ्जितदेहम् , शुभकर जालै र्वितरितभासम्

भक्ति विनत जनवन्द्यम् , वन्दे --- भारत! चरण.

रम्य निनादं हंसं प्रसारं , भव्य समीरैर्जित सुखगारम्

गौरव विभवसु विशदम् , वन्दे --- भारत! चरण.

शष्प सुरम्यं घास विकीर्णम् , फलभर भरित निजाङ्कम्

भारत सुहृदय हृद्यम् , वन्दे --- भारत! चरण

* [illegible] [illegible] [illegible] अखिला स्व कृति. कर्.

श्यामल वृक्षैः संकुलकूलम्, सुन्दर शैलैर्द्विगुणित शोभम्

विधुरित सकल कलाधर भासम्, वन्दे -- भारत!

तालतमालाशोक सुरम्यम्, हिमगिरि कृतमुनि वासम्

योगिजनैः कृतवसतिम्, वन्दे --- भारत! -चरण.

इन्द्र विरञ्चि सुरैरभिवन्द्यम्, सुरनगराभितदीप्तिम्.

भक्तिविनत जन वन्द्यम्, वन्दे -- भारत! - चरण.

विश्वमनुष्यैर्निश्व सुगीतैः, गीतगौवं गुणाढ्यम्

भिन्न विभव परिवीतम्, वन्दे- भारत! -चरण.

# आशा

किमिति रोगाक्रान्तोऽयं दन्दह्यमानदेहदग्धतया अम्बुमध्यशशीव प्रवेपमानः, अस्थिमात्रावशेषतया उत्कीर्णमूर्तिरिव परिदृश्यमानोऽपि श्वसन् जीवेच्च भिषग्भेषजं सादरं प्रतीक्षत इव। किमिति पुनः पुनः प्रपतितपीडापुञ्जपञ्जरितः, निरतिशयनिराशानिशानिविष्टनयनतयेव समग्रसंसारमपगतसारम् एकान्ततो दुःखचिन्तापद्भारञ्च निचायं निचायं चिताचयमुररीकुर्वन्न प्रतिबहते कर्तुम्। कारणं हि खलु सर्वास्विमास्ववस्थासु नितरां केवलमेकमेवेदम् आशाख्यम्। मनुष्यो हि समुच्छ्रित कृष्णतमकालोऽपीह भविष्यदाकाशे विकाशमानमाशाप्रकाशमालोक्य समवधारयति धैर्यं, अवगणयति च दुःखम्। अनयैव मानवसाधारणप्रवृत्त्या कारणभूतया जगतीह कवयो दुःखदूनान् आश्वासयन्ति मनुजान्, केचन तावत्कवय आत्मनोऽपि दुःखनिर्वाणार्थं समाश्रयन्त्येतामेवाशालतिकामिति नासत्यमङ्गीक्रियते मया। आशारूपमेव दर्शयन्सुष्ठूवाच कश्चिदाङ्गलः कविः—

Be still, sad heart,
and cease repining;
Behind the clouds is
the sun still shining;

अर्थात् — "शान्तो भव शुचं मुञ्च, अनुमेघं रविप्रभा"।

इति वयं विशदं विलोकयाम आशा प्राणभरणायात्यर्थावश्यका इति। आशां विना मनुष्यजीवनं प्रतिक्षणं क्षतिग्रस्तं स्यात्। न खलु आपत्प्रभञ्जनो जनं नयेन्मृत्युलोकमितीव समाश्रयणीयपादप इवाशा। "किं करोमि क्व गच्छामि पतितो दुःखसागरे" इति दशामुपगताय पुरुषाय केवलमाशैव सहायिका सखी वा। आह च कश्चित् —
"किं कर्तव्यविमोहिते हि पुरुषे,
आशा महानाश्रयः"
सृष्ट्यारम्भे हि परमपुरुषेण संरचिते पुरुषवर्गे, प्राक्तन पुण्यपापादि विविध कर्मन्यायार्थम् समुत्पादिते सुखदुःखादि द्वन्द्वे; न पुनर्दुःखाब्धि क्षुब्धो जनवर्गो भव सर्गे विसर्गं कुर्यादिति व्यरचि अमोघौषधमाशारूपम्। अयं तावत्प्रथम आशाप्रकारः।

कुत्रचिदन्यत्र कस्यचिद्वस्तुनः प्राप्त्यर्थमप्याशा विधीयते। अस्यामाशायां तृष्णायाश्च महदन्तरं वर्वर्तितराम्। इयमाशा महत्कार्यसम्पादिका उन्नतिपदे स्थापयिता च नृणाम्। मनुष्यो हि विधीयमानाशाविशेषाद् यथोत्प्रतियाति, तथाऽऽशया पुनः पुनः प्रतिहतः, सव्रीड इवोद्गच्छत्युन्नतिम्। इयमेव आशा कदाचिदात्माभिमानरूपे-

# देव-गोष्ठी

या समधिगम्य समग्रं पुरुषमधःपाताल्लिवारयति हिताय च योजयते। मनुष्यो हि नामैकामाशामुपजीव्य कार्यं कुर्वाणो जगतीतले कदापि नोऽलभतेऽनुत्साहम्। पितरौ नाम स्वपुत्रे महतीमाशां विदधतुः प्रवृत्यैव प्राप्नोति पुत्रं प्रकर्षमार्गमापन्नम्। पुत्रोऽपि नाम तामाशां पितृभ्यां प्रयुक्तामालोक्य विपरीतमाचरन्नपि सहसा सचेतयते करोति च यथा यथम्।

आशा नाम असाधारणा अनुपलभनीया अतुल्या या न कदाऽपि करणीया। एतेन हि मानवो महतीमपि कदाचिदाप्नोति दुर्गतिम्। आलम्ब्य महती सुकुलामाशां प्रचलितः कश्चित्स्वलक्ष्यलाभाय, अकस्मात्प्राप्य आशाविपरीतानुपातेन विषादमालभते।

कदाचिद्धि जना आशामालम्ब्य तत्रैव संलग्ना मग्नाः संजायन्ते। न तत्प्राप्त्यर्थं कोऽपि यत्नो विधीयते। एवमाशां सर्वोऽपि जनो ~~[illegible]~~ मानवः तत्त्ववेत्ता नाः स्पृहयेत। एवमिच्छयो हि आशाः समयं समयं अनुरूपमापतन्तीति कथनम्।

[signature]

# दुर्गति भाग्यहीनस्य

(निबन्धकः - ब्र. सत्यव्रतः)

अस्मिंस्तु संसारे, असारे वा निखिलेऽस्मिन् जगतीतले भिन्नभिन्नमनुष्य परमकारुणिक सर्वज्ञेश्वरानुग्रहेण बह्व्यो भाषाः समधीताः। तत्र च गुर्जरादिषु गीर्वाणवाणीषु ननु प्रान्ततया प्रवेशोऽप्युपलब्धः। सहैव तेषां भाषाणां रुचिभिरपि प्राप्तः परिचयः। परं न खलु तैः पुष्पभवेद् कुत्रचिदपि परं गीर्वाणगिरः कविषु। कस्यचिदपि वस्तुजातस्य प्रकाशने यत्प्रावीण्यं तेषां, न तत्केष्वपि नैतादृशी भवति परमपरिचयपद्मनाकरमयीति नात्र सन्देहलेशावसरः कस्यापि।

आर्यभाषा कलापस्तु तेषामेवोच्छिष्टं संगृह्य स्वनिर्वाहं सम्पादयन्त्यो दरीदृश्यन्ते। आङ्ग्लभाषाविद्वत्कवीनां तु किञ्चिदन्यदेव वृत्तं। तेषु सारल्यमप्यामेव काव्यभङ्ग्यां भावान् उत्थापयन्ति यथा रसानुरक्ताः पाठकामं निपतति। अस्तु,

संस्कृतकवीनां हस्ते तु प्रथममेव भाषातीव सुसमृद्धा (rich) यस्यां नानाविध शब्दे विविधशैलीषु विचारणस्य रीतिर्वर्तते।

भाला ऽत्स्यमत्कारः स्यु नाऽपि
रूपकमेव किन्तु, स्वर्णे सुगन्ध
इव। सम्प्रति अस्मिकेस्मिन्न-
द्भुते नैपुण्ये भवतो नेतुम-
भिलषामि। को न वेत्ति
महाराजभर्तृहरीयम् तेनोक्तं-

"खल्वाटो दिवसेश्वरस्य
किरणैः सन्तापितो मस्तके,
वाञ्छन् देशमनातपं विधिवशात्
तालस्य मूलं गतः। तत्राप्यस्य
महाफलेन पतता भग्नं सशब्दं
शिरः, प्रायो गच्छति यत्र
भाग्यरहितो यात्येव तत्रा-
पदः।"

तात्पर्यमिदं यद् भाग्य-
विरताय जनाय न कुत्रचिदपि
स्थानम्। प्रथमं तु खलिन
भाग्यविरहिते परमेश्वरेण यथा
[illegible] पद्भाक्स्य शिरस्येव
न केशाः, पुनः मरीचिमालिनो
निशितमरीचिभिरभितप्तः, दुर्भा-
ग्यमिदमपाकर्तुं तालशरणमगमत्,
तत्र पवनराजेन चुकोपे, पातितं च
महाफलं प्रबलप्रभञ्जनेन समभ-
ग्नस्य शिरसि, अस्तु. भवत्
एव कथयतु. अस्ति कुत्रचिदपि
तस्मै स्थानम्! यद्यप्रसन्नो
ननु देवदेवो, सर्वे देवा अपि
तमनुययुः।

लोकेऽस्मिन् भर्तृ-
हरिणा तथ्यस्यापि तथ्यं
प्रतिपादितम्। यत्र तत्र सर्वत्र
भाग्यरहितेभ्यः सम्मुद्रितानि
ननु द्वाराणि। तेभ्योऽस्मिन्
~~जगत्यां~~ किन्तु. धात्रीमण्डले
किन्तु ब्रह्माण्डमण्डलेऽपि न
स्वर्गसुखं न।

अस्मिन्नेव स्थाने
श्रुतिं जन्म तैश्चेद् रासभ
घोटकाश्वश्च विड्वराहयोनिं,
परलोकं गतेष्वतेषु तेषु
नरकद्वारमुन्मुद्रितं यत्र
अननुभूतचरं कष्टजातमनु-
भवन्त्येते। लोकान्ते क्वापि
नाविधयेवाशा सेवनीया
यत्स्वकर्मपालकपरमात्मना

## देव-गोष्ठी

पि दैवनिहतेभ्यो न खलु क-
श्चिद्विशेषोपलब्धोऽकारि।
परं किं करोतु जगदी-
श्वरः, कर्मानुसारं क्रियाफल-
प्रदानाय स्वसुतानपि निर्दयं
स्मिन् जन्ममरणचक्रे भ्रामयत्येव।
अद्यैव चेद् भारतवर्षं स्वाधीन-
माप्नुयात्तु, पुनः जनिष्यति देश-
द्रोहिणो दण्डदानाय। सम्प्रत्येव
चेद्देशिका हरिजनबन्धुत्वं ग-
च्छेत्, तर्हि सामान्यवार्तां
व्यञ्जनं विधातुं किं स्वप्न-
मपि भविता। एतैः सर्वैः नि-
यमाः सततमपि परमात्मना
भाग्यहीनानां विशिष्टा श्रेणी
पूर्वत एव सज्जीकृता। एषा च
श्रेणी सर्वत्रैवोपलभ्यते परमेश्वर
शक्तिरिव। अज्ञातदेशः समृद्ध-
तमो देशो ननु। तत्रापि भाग्यहीना
जनाः सन्त्येव, तेषां कृते मित्र
मजदूरी नितान्तमावश्यकी। तेषां
हृदयान्यपि पाषाणे तिरस्कार-
वह्निज्वालयेव सन्तप्यन्ते। किं
कुर्मः, भाग्यविरहिता एव हि
स्वता हेम।
शङ्का भवितुमर्हति यद्
रूसप्रदेशे समाजवादः प्राब-
ल्येन प्रचरति, कदाचित्तत्रैव
कश्चिद् भाग्यरत्नः रक्षां प्राप्नोति।
शङ्केयमपि गगनकुसु-
मता इव निर्मूला। करुणस्य
(परमात्मनः) पाशास्तत्रापि
प्रसृता एव। जानीथ, कोऽयं
स्टेलिन महोदयः, निष्कृप-
कृपाणपाणिः क्रूरहृदयः क्रूर-
सिंह एव। साम्यवादविरु-
द्धं पश्यति एवं वक्ति
गलपाशं ददात्यथ स्वाङ्गु-
लीभ्यां नैव काभ्यामपि
विनैवापराधं चक्षुरहितेन
गलात् कर्तयित्वापि पशुभ्यः
प्रापयति। आस्तां तावत्।
इतरत्र समाचारपत्रिकासु
लिखितमस्त्येव प्रकरणं
प्रकाश्यते।

यत्र भाग्यविरहितानां दुर्बलानां मुखदृशं सत्वरमेवाधिगम्यते भयङ्करा मेघाः सर्वदा स्वासं अयमेव 'दमः' (साहसः) यत् (दम) गृहीतुमपि नैव मुञ्चति दमो दमयुत्पादयति यथा तथैव भाग्यवतामपि कृते कार्यं कार्यकरं, रूप्यकं कुम्भीरवत् (दम) (हिम्मत) सञ्जीभूत एव। रूप्यकाणाञ्च उत्पादयति।

किमिदं 'दम' नाम?

कश्चिद् विद्यन्ति नन्दिकया सम्बन्धिः।

न विद्यते 'दम' यस्मिन् विद्यतिरपि तु विद्यतेरन्ति-रिक्तमात्रं किञ्चिद् वस्तु। सकलस्यैतत् सकल शक्ति विधत्ते, स्थिरं। 'दम' भावाद् युगपदेव 'दम' (स्थिरस्य कार्यसम्पादनक्षमता) उपलभ्यते। अनेनैव च प्रसिद्धेन वस्तुना मनुष्यः सुखदृश (प्रधानतां) प्रतिपद्यते। काश्मीरे च संजाते 'दम' (रूप्यकाणां) मूलं

सुविदितोऽस्त्येव 'दम' प्रभावेण येतास्मा जगत्सत्कारं सम्पद्यते, सर्वत्र प्रकाशावलिमण्डिता रुचिररमणीया हर्म्यालि दृश्याः सुन्दरतर हरी-दृश्यन्ते।

परन्तु यदि वयं 'दमं' परिवर्तयाम तर्हि तदेव 'मद'रूपेण प्रकटी-भूय 'दमनं' चक्रं चाल-यतितमाम्। दमनमिदं तदेव यस्य प्रत्यक्षप्रमाणं निष्ठुरवीभूय सत्या गृह-सर्वान्यपि अमोघा-

प्रथमं तावद् दैवदुर्विपाक-
वशाद् हतबुद्धिरयं उल्लूक-
स्वत एव एशियाखण्डे,
तथापि सकलदुःखदायि-
नि भारतवर्षे, पुनश्च
हिन्दुपदच्युतहार्दस्य वत्से-
चिन्महाशयस्य गृहे.
तथापि वैचित्र्यमिदं यत्
कस्यचिदप्यस्य हर्ष-
जनकत्वे:।
एवं युगपदेव
सर्वा विपत्तयस्तं मत-
महिजं गृध्रा ह्वानपत-
न्ति नियतम्। अपि तु
त्रिखिले, स्फुर जगती-
तले न कापि विपद्
या तस्योपरि स्वपरा-
क्रमकेलिं न विदधाति।

तस्य भाग्यहन्तकस्य
पार्श्वे किञ्चिदपि न
विद्यते विनापदाम्।
तस्य पार्श्वे
वस्तूनामभावपरिचयः
नियतमेवास्मात् स्व-
विचित्र-चमत्कारं प्रदर्श-
यन्ति तोलतीत्यकाङ्
संयोजयितुं पार्यते
मम लेखन्या। यथा
पीधापितुं वस्त्राणां,
भोजनस्य स्वजीवनं-
निर्वाहयितुं, निवास-
स्थानस्य सुचिरं
ससुखमुपभुजितुम्,
औषधीनां स्वगृहाद्य-
नास्य रोगान्
अपहर्तुम्, प्रयत-

## हृद-गोष्ठी

लेखनस्य स्वचारित्र्यं प्रत्येकं वस्तु निरर्थकेव
निर्मातुं बुद्धिश्च विका- तस्य गुणात्मकत्वमभि-
सयितुम्, रमणीयस्य पत्यान्तितरं नवीकर्तुं
मनोरञ्जकस्य वस्तुनः प्रयतते। दृश्यतां
मनः प्रह्लादयितुमित्यादी. तावद् भावस्यापि
नां सुतरामभावेऽव माहात्म्यमेतस्य स्वीयो
नयन पथमधिरोहन्ति . तत्र किंकर्त-
व्यहृदयानां पाठकानामजस्र व्यतामृगतायाः, उदासी-
मिति। तात्पर्यं त्विदं यत् नगरस्य, सकलजनताया-
तस्य हतभागिनः इते दाबितां रोगाणाम्
समत्वादमानभावस्या - तथापि . प्रेमोहकारिण्यः
वरषं ननु प्रच्छन्न हरिवर्ष देशवास्तव्यानां
मित्येव प्रतीयते, तेन। प्रियलभाया अदितायाः;
यदि सावधानं बुभुक्षितानां युवकानां
मनो नियोज्य वयं तस्य रुदतां क्षीणगात्राणां
समीपे आवाश्यं किमपि शिशूनां जीवारत्न,
वस्तु प्रेसामहे तदपि निरतिशय दुःखदायिनां

ईर्ष्याग्निना सारमेयाना-
मिव सवर्णानां स्वबा-
न्धवानां निष्कासनात्मा-
चारस्य, इतस्ततः
परिभ्रमतां सुमनोहरबाला-
नामुपरि मलिनकामुकाना-
वनचर रक्तपातं विदधतां
वारुणीसेवनविकृताङ्गा-
ङ्गीजनाकाराणां नगर-
रक्षापुरुषाणां (पुलिसों के)
भालकृत्य, साक्षान्मूर्तिम-
त्या दीनतायाः, कलितकले-
वरया चिन्तापरस्तया
च शिथिलगात्रेण कृशतनोः,
केशेषु गृहीत्वा स्पन्दन
इतोरिव ~~~~ निरति-
शयोपचितस्य ऋणभारस्य
दयालो, परमकारुणिक प्रभो!

किमिदमापतितम् किं
करोम्यहं कर्तव्यानभिज्ञो
दिग्मूढः, क्व यामि.
प्रसादं कुरु इत्यादि
स्मरणांस्य, स्वकीय-
तनयानां विगलित-
नेत्राणां दुःखकरं दृश्यं
विलोक्य रोदनस्य
च भावो पश्यत।
भवास्माकं सम्मुखे
परापतन्तीव। यथा-
पि कुत्रचिद् दृष्टिपातं
विक्षिपेत् तत्रैव
भावात्मकं भाववस्तु
समवलोक्यते।
अस्यैव भावा-
भावस्यैव चक्रे
इत्थं सुपीनय

## देव-गोष्ठी

क्रियते खलु यथा धान्य-
संचूर्णनि यन्त्रे (चक्की) पुनः
कश्चिद्। तलस्थ निर्मित-
मपि तावदेव दुष्करं
याव-न्मायामोह विमुक्तो
स्थिर विगतसारे संसारे
विमुग्धस्य मुक्तिरस्ति।

आर्यसमाजप्रवर्त-
महामहिम महर्षिदयानन्दगुरोर-
संख्यैः शिष्यैरहर्निशं
भारतवर्षाद्विस्यस्यतां निवा-
रयितुं बहुविधाः प्रयत्नाः
विधीयन्ते, अखिललोक-
वन्दनीयस्य परमपावनीयस्य
महात्मनः गांधिमहाभागः प्रयु-
रवैः सत्यागैरस्माकं परम
कारुणिक स्वराज्यपदवीलिप्सु-
नामधा कांग्रेससंसदीयस-

समयापि निरन्तरमन-
वरत परिश्रमेण तेषां
ग्राम्यवरकाणां आत्मा-
भीतवान्धवानां हरिजनाः
नामस्थ स्येतास्वायमन-
कुर्वतां परमसुखात्
क्रियते प्रतिष्ठितं परं
अधावधि 'हरिजन'
शब्देन सम्मानय
न्ति वदामास्तो। अस्ति
तस्य साधारणपौरा-
णिक लोकहस्य 5
हरिजन इत्ययं
कुसुमपुरो महोदर
बंशस्थितौ शब्द एव
महात्मभिरेव जनैर-
पयुक्तः, नोतिर्मूल
परं सनातनीमतेन

स्वात्मानं निगड्य सुखी भवतो ननु। म्लेच्छास्तु महम्मदीया बुधैः परं प्रख्याबलि यथा चेम्बर-लीनमहोदयः राजनीतैः, तेच जडवादं विलोक्य प्रहृष्यन्ति यथा मण्डूका कर्दमं वीक्ष्य। अतस्तत्रापि न ते सुखं शयितुं शक्नुवन्ति। आर्यसमाजिनस्तु संगतं सुधार-प्रचारौ च कुर्वाणा "स्वधर्मे निधनं श्रेयः परधर्मो भयावह" इति नारस्वरेण सम्भाषकाः दृश्यन्ते।

अधुनापि ना बलितं भाग्यविहीनानां दुर्गतिः। यदि ते कदाचिद् विदेशं गन्तुं विमर्शयेयुः, तथापि सद्यः महान् भयङ्करो दुःख प्ररोहः प्रादुर्भवति। तथ्यं सत्य एव प्ररोहयन्ति यत् न वयं वैदेशिका एव भविष्यामो भारतीया वा। यथा रजकस्य कश्चिन्न गृहस्यैव नं चापि घट्टः। इत्थं सर्पस्येव गतिर्भविता यतः इत हि अस्माकुपस्थित हि छन्दरः। त्रिशङ्कुरिव 'मध्येगगनं' लम्बन्तमेव। सत्यमिदं यत्- भाग्यो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः॥

उप शम-

कु. [illegible]
नवनीत

## हृद्य-गोष्ठी

मि. कांग्रेसदेवः - हाँ, पिब वत्स ! मुस्लिमलीगदेवपानता ।

श्री खापर्डे महोदयः - अहो ! हा ! अयमहो, किम्पुना नाद्यक्षेऽपि युवती-
नामभिलाषो वर्तते । गृह्यतामिदं जलं. पीत्वा धैर्यं
धारय ।

